# एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ फेब्रवरी - २००४ सञ्चिका - ११



भल्लूकमान्त्रिकः
१३



अनन्तस्य आकाङ्क्षा
(वेतालकथा)
१९



पुराणकथावली
२६



विष्णुपुराणम् - २
४५

## अन्तरङ्गम्

★ दृष्टिदोषः ...७ ★ सञ्जीवस्य विद्या ...८
★ भल्लूकमान्त्रिकः - २ ...१३ ★ अनन्तस्य आकाङ्क्षा ...१९
★ वार्ताविशेषः ...२५ ★ पुराणकथावली - २२ ...२६
★ अष्टादशसम्बद्धा समस्या ...३०
★ नर्मसचिवस्य समस्या ...३४ ★ कथास्पर्धा ...४०
★ सफला यात्रा ...४१ ★ विष्णुपुराणम् - २ ...४५
★ रक्तसम्बन्धः ...५१ ★ शृगालस्य बुद्धिमत्ता ...५५
★ धनिकनिर्धनभेदः ...५८ ★ आर्यः - ६ (चित्रकथा) ...६०
★ पुटोऽयं भवताम् ...६४ ★ चित्रशीर्षिकास्पर्धा ...६६

**ग्राहकशुल्कम्** -
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal,
**CHENNAI - 600 097**
E.mail : subscription@chandamama.org

## शुल्कविवरणम्

वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



*संस्थापकौ –*
**चक्रपाणिः नागिरेड्डी च**

# संरक्ष्यतां भूमिः

नववर्षस्य आरम्भः यावत् जातः तावता वार्ता आगता यत् इण्डोनेशियादेशे महान् भूकम्पः जातः इति । सहस्त्रशः जनानां प्राणहानिः, महत्याः सम्पत्तेः हानिः च जाता । ततः सप्ताहात् पूर्वम् इरान्देशः अपि दारुणेन भूकम्पेन पीडितः जातः । तस्मात् प्राचीने बाम्नगरे ५०,००० अधिकाः जनाः प्राणैः वियुक्ताः जाताः ।

भूकम्पः प्रकृतिविकोपत्वेन परिगण्यते । किन्तु एषः प्रकृतिविकोपः आकस्मिकतया जातः, जायमानः वा न । तादृशी घटना यथा घटेत् तथा व्यवहरन्तः स्मः वयं मानवाः ।

अस्माकं शरीरे चर्मणः विशिष्टं स्थानम् अस्ति । तस्मिन् यानि रोमरन्ध्राणि भवन्ति तानि श्वासोच्छ्वासाय शरीरस्य तापरक्षणाय च उपकुर्वन्ति । तेषाम् अवरोधः यदा भवति तदा शरीरे पिटकाः उत्पद्यन्ते ।

एवमेव भूमेः ऊर्ध्वतलम् अपि नगरनिर्माणादिभिः कारणैः यदा पीडितं भवति तदा भौगोलिकसमत्वं हानिग्रस्तं भवति । तदा भूमेः आन्तर्ये समतोलनरक्षणाय क्रियाः उत्पद्यन्ते । तादृशानि चलनानि एव भूकम्पादीनां कारणानि भवन्ति ।

लोभशीलता मानवं भूमेः खनने प्रवर्तयति । जलाय सः भूगर्भं खनति । तैलाय सः आभूगर्भं रन्ध्रं करोति । सः भूमेः अन्तः स्फोटं करोति । भूगर्भे अपि स्फोटनं करोति । परिसरस्य मलिनतां सम्पादयति । नदीनां सहजवेगं अवरुणद्धि । त्याज्यवस्तूनि नदीजले पातयति । एतादृशैः कारणैः निसर्गः कुपितः भवति । पूर्वसूचनां विना सः स्वस्य कोपं प्रदर्शयति अपि ।

परिसरसंरक्षणं कृतं चेदेव मानवः सुखमयं शान्तियुक्तं च जीवनं यापयितुम् अर्हति । अतः भौगोलिकसमतोलनस्य रक्षणाय, भूमेः संरक्षणाय च चिन्तयितुम् अयमेव अस्ति सुकालः ।

*सम्पादकः –* **विश्वम्**





# दृष्टिदोषः

पुरा अपराधिनां दण्डनं महत् क्रूरत्वोपेतम् आसीत् । अपराधः यादृशः वा भवतु नाम दण्डनं सर्वेषामपि समानम् आसीत् । अपराधिनः कण्ठे काष्ठं बद्ध्वा तम् आतपे उपवेशयन्ति स्म दण्डाधिकारिणः ।

रतनः नाम कश्चन पुरुषः ग्रामात् बहिः चरन्तं कञ्चन वृषभं चोरयित्वा रज्ज्वा तं बद्ध्वा नीतवान् । एतत् चौर्यं कश्चन गोपालकः दृष्ट्वा ग्रामाधिकारिणम् उक्तवान् । ग्रामाधिकारी सेवकैः रतनम् आनाय्य बन्धितवान् । तस्य कण्ठे काष्ठं बद्ध्वा सूर्यास्तपर्यन्तं तम् आतपे उपवेष्टुम् सूचितवान् ।

किञ्चित्समयानन्तरं रतनस्य एव ग्रामस्य निवासी किशननामकः एवं दण्डितं रतनं दृष्ट्वा आश्चर्येण पृष्टवान् – ''एतत् किम् ? भवतः कण्ठे काष्ठस्य बन्धनं किमर्थम् ?'' इति ।

''एतत् मम दौर्भाग्यम्'' इति रतनः उक्तवान् ।

तदा किशनः – ''किम् अभवत् इति स्पष्टं वदतु'' इति उक्तवान् ।

''ग्रामात् आगच्छन् अहं मार्गे काञ्चन दीर्घां रज्जुं दृष्टवान् । तां रज्जुं स्वीकृतवान् । तावदेव । मया घोरः अपराधस्तु न कृतः'' इति उक्तवान् रतनः ।

''मार्गे पतिता रज्जुः स्वीकृता इत्येतदर्थं किम् एतादृशं दण्डनम् ?'' इति किशनः आश्चर्यं प्रकटितवान् ।

''तस्यां रज्जौ पञ्चषशतरूप्यकाणां कश्चन वृषभः आसीत् । मम दृष्टिदोषात् सः न दृष्टः'' इति दीनस्वरेण उक्तवान् रतनः ।





# सञ्जीवस्य विद्या

गङ्गापुरे सञ्जीवनामकः कश्चित् कृषिकपुत्रः आसीत् । सः क्षेत्रे कार्यं करोति स्म । एवं कार्यं कुर्वन् एव सः पण्डितेभ्यः शास्त्रशिक्षणमपि प्राप्तवान् । कवितायाः रचनायां, गीतानां गाने, विविधासु कलासु चापि तस्य महती अभिरुचिः । अतः कदाचित् पिता धर्मराजः पुत्रम् उक्तवान् - ''भोः, एकत्र वा सम्यक् परिश्रमं करोतु । सर्वस्य शिक्षणस्य अनन्तरमपि कस्यचिदपि विषये यदि दाक्ष्यं भवतः न भवेत् तर्हि भवदीयं भाविजीवनं कष्टमयं भवेत्'' इति ।

किन्तु सञ्जीवः पितुः वचांसि गम्भीरतया अपरिगणयन् उक्तवान् - ''तात ! इदानीं कालः परिवृत्तः अस्ति । एषु दिनेषु सुखेन जीवितुम् अनेकाः विद्याः अभ्यसनीयाः भवन्ति । पूर्ववत् एकया विद्यया सुखजीवनं न शक्यते । अतः मया बह्व्यः विद्याः अभ्यस्यन्ते'' इति ।

धर्मराजः इदानीं महाधनिकेषु कृषिकेषु अन्यतमत्वेन परिगण्यते । किन्तु पूर्वं तस्य अत्यल्पा एव कृषिभूमिः आसीत् । कृषौ विशेषावधानं यच्छन् महता परिश्रमेण सः धनवान् जातः आसीत् । पित्रा कृतम् ऋणं प्रत्यर्प्य भ्रातॄणां साहाय्यं कृतवान् सः । उभयोः भगिन्योः विवाहमपि कारितवान् । स्वपुत्र्याः विवाहोऽपि महता वैभवेन कृतः । जीवने एतावन्ति कार्याणि निरुह्य अपि सः स्वपुत्रविषये असहायः एव आसीत् । यतः पुत्रः सञ्जीवः ग्रामे वासम् अनिच्छन् नगरवासं कर्तुम् ऐच्छत् । कोऽपि तेन सह किमपि वक्तुं यदि उद्युक्तः भवति तर्हि सः दीर्घभाषणं कुर्वन् सर्वान् खेदयति स्म ।

अस्य एतादृशीं प्रवृत्तिं पश्यन् धर्मराजः पुत्रम् असकृत् वदति स्म - ''आत्मश्लाघनं न उचितम् । आदौ अन्येषां व्यवहारं प्रवृत्तिं च सम्यक् परिशीलयतु । तेन किमपि ज्ञातुं

प्रयत्नं करोतु । नो चेत् भवतः भविष्यं सुखमयं न भवेत्'' इति ।

कदाचित् सञ्जीवस्य मातुलः सीतारामः गृहं प्रति आगतः । सः सञ्जीवं दृष्ट्वा एष एव मम जामाता भवितुं योग्यः इति निश्चितवान् । धर्मराजः अपि तदीयं विचारं ससन्तोषम् अङ्गीकृतवान् । किन्तु सञ्जीवः उक्तवान् - ''अहं अनेकासु विद्यासु पारङ्गतः अस्मि । या मां परिणेष्यति तया अपि पञ्चषाः विद्याः अवश्यं पठिताः स्युः । भवतः पुत्री राधा यदि अनेकासु विद्यासु पारङ्गता स्यात् तर्हि मां परिणेतुम् अर्हेत्'' इति ।

एतत् श्रुत्वा सीतारामः सञ्जीवम् उक्तवान् - ''भवता कासु विद्यासु प्रावीण्यं प्राप्तम् इति अहं तु न जानामि । भवतः विषये तादृशी वार्तापि मया कुत्रापि न श्रुता । ताभिः विद्याभिः को लाभः इत्यपि न जानामि । आत्मना पठिताभिः विद्याभिः यदि भवता राजास्थाने उद्योगः प्राप्येत तर्हि मम पुत्री राधा अपि ताः विद्याः पठिष्यति'' इति ।

सञ्जीवः मातुलस्य वचनेन प्रेरितः इव तदेव लक्ष्यं मन्यमानः शीघ्रमेव राजधानीं प्रति प्रस्थितः । राजधान्यां कस्याञ्चित् धर्मशालायां सः वासम् अकरोत् । तत्र तेन कस्यचन श्मश्रुलस्य ज्येष्ठस्य परिचयः प्राप्तः । सञ्जीवः तं वृद्धं स्वस्मिन् स्थितं वैशिष्ट्यं सर्वम् उक्त्वा - ''राजास्थाने उद्योगं लब्धुम् आगतः अस्मि । तत्र उद्योगः लभ्यते इत्यत्र मम संशयः नास्ति । किन्तु तत्र कियत् वेतनं प्रष्टव्यम् इति विषये मम मनः डोलायमानम् अस्ति'' इति अवदत् ।



सः ज्येष्ठः सर्वं श्रुत्वा उक्तवान् - ''भवता दीयमानेन परिचयेन मया एतत् ज्ञातं यत् भवान् अनेकासु विद्यासु पारङ्गतः अस्ति इति । राजास्थाने भवादृशस्य किमपि स्थानं नास्ति । यदि भवता खड्गयुद्धं ज्ञातं स्यात् तर्हि अहं भवते तत्र उद्योगं दापयेयम्'' इति ।

''खड्गयुद्धं किञ्चिदेव जानामि । तस्मिन् प्रावीण्यं प्राप्तुं योग्यस्य गुरोः आवश्यकता अस्ति । अत्र तादृशः कश्चन गुरुः अस्ति किम् ?'' इति सञ्जीवः तं ज्येष्ठं पृष्टवान् ।

''अत्र वीरवरनामकः कश्चन गुरुः अस्ति । खड्गविद्यायां नितरां निपुणः सः । योग्यः विद्यार्थी लब्धः चेत् सः निःशुल्कं पाठयति अपि'' इति सः ज्येष्ठः उक्तवान् ।

अनन्तरदिने एव सञ्जीवः वीरवरस्य गृहं गतवान् । तत्र स्वापेक्षां निवेदितवान् ।



वीरवरः तं दृष्ट्वा – ''दर्शनेन भवान् चतुरः इव भासते। भवान् एकाग्रचित्तः सन् यदि अभ्यासं करिष्यति तर्हि सप्ताहाभ्यन्तरे खड्गविद्याप्रवीणः भविष्यति'' इति उक्तवान्। ततः तं शिष्यत्वेन परिगृहीतवान् च।

सप्ताहे एव खड्गविद्यायां नैपुण्यं प्राप्य सञ्जीवः गुरोः प्रशंसामपि प्राप्तवान्।

ततः सः पुनः तस्यामेव धर्मशालायां तेनैव ज्येष्ठेन मिलित्वा उक्तवान् – ''श्वः एव मह्यं राजास्थाने उद्योगं दापयतु'' इति।

तदा सः – ''महान् अनर्थः सञ्जातः। यतः ह्यः एव कश्चन तरुणः खड्गविद्यां प्रदर्श्य तत्र उद्योगं लब्धवान् एव। किन्तु चिन्तां मा करोतु। राजास्थाने आयव्यय-गणनाविषये परिणतः कश्चन अपेक्षितः। यदि तत्र प्रयत्नः क्रियेत तर्हि उद्योगः लभ्येत। किन्तु कोषागारस्य पद्धतयः भिन्नाः भवन्ति इति कारणतः भवान् गणितज्ञं भास्करं दृष्ट्वा ततः विद्यां शिक्षताम्। सः सुलभमार्गं प्रदर्शयिष्यति'' इति उक्तवान्।

सञ्जीवः ज्येष्ठस्य तस्य सूचनानुगुणं गणितज्ञं भास्करं दृष्ट्वा सप्ताहं यावत् तत्र कोषागारसम्बन्धिनीः पद्धतीः अभ्यस्तवान्। किन्तु यावत् सः अध्ययनं समापितवान् ततः पूर्वमेव तम् उद्योगमपि कश्चन तरुणः प्राप्तवान् आसीत्। पुनः निराशः सन् सञ्जीवः तं परिचितं पृष्टवान् – ''राजास्थाने कोऽपि उद्योगः न लभ्यते किम्?'' इति।

''प्रतिसप्ताहं काचन विद्या भवता अभ्यस्यते। तस्यां महान् परिश्रमोऽपि क्रियते। अनेन भवतः कोऽपि क्लेशः नास्ति किम्?'' इति पृष्टवान् ज्येष्ठः।

''अहं विद्यातुरः अस्मि। विद्याभ्यासाय प्रयत्नं कुर्वता मया कदापि क्लेशः न अनुभूतः'' इति सगर्वम् उक्तवान् सञ्जीवः।

''मातुलाय स्वसामर्थ्यं प्रदर्शयितुं भवान् आगतः अस्ति। मासात्मकः कालोऽपि अतीतः। किन्तु इदानीमपि भवता राजास्थाने उद्योगः न प्राप्तः। अतः पुनः गङ्गापुरम् एव गत्वा तत्र स्वस्य पराजयस्य अङ्गीकारः एव उचितः इति अहं मन्ये। कृषिक्षेत्रे कार्यं कुर्वन् भवान् पितुः साहाय्यं करोतु'' इति सूचितं तेन वृद्धेन।

तदा सञ्जीवः तस्य वचनम् अनङ्गीकृत्य उक्तवान् – ''अहं तु मातुलाय वचनं दत्तवान्। अस्मिन् विषये अहं पराजयं प्राप्तवान्

स्याम् । तथापि 'मया पठिताः सर्वाः विद्याः अप्रयोजिकाः' इति तस्य अभिप्रायं तु अहं न अङ्गीकरोमि । कदाचित् अहं राजास्थाने उद्योगं प्राप्स्यामि एव'' इति ।

''राजास्थाने उद्योगं प्राप्तुं भवतः विद्याः न पर्याप्ताः'' इति उक्तवान् सः ज्येष्ठः ।

''अद्यैव मया यदि राजास्थाने उद्योगः प्राप्येत तर्हि भवता मह्यं किं दीयेत ?'' इति पृष्टवान् सञ्जीवः ।

''राजास्थाने उद्योगं प्राप्स्यामि एव इति या प्रतिज्ञा भवता कृता सा कदापि पूर्णा न भविष्यति'' इति उक्तम् तेन ज्येष्ठेन ।

''एवं निश्चितरूपेण कथं भवान् वदति ?'' इति सञ्जीवः पृष्टवान् ।

''यतः अहमेव राजा अस्मि अतः'' इति सः ज्येष्ठः उक्तवान् ।

एतत् श्रुत्वा सञ्जीवः निश्चेष्टः अभवत् । तदीयं मुखं विवर्णं जातम् । क्षणकालपर्यन्तं सः तथैव स्थितवान् । ततः आत्मानं निगृह्य सः राज्ञः पादयोः प्रणामं समर्पितवान् ।

राजा प्रीत्या तम् उत्थाप्य - ''मयि आदरः अस्ति चेत् भवान् मम आज्ञां पालयतु । इदानीमेव भवान् ग्रामं प्रतिगच्छतु'' इति उक्तवान् ।

''महाराज ! भवता सर्वप्रकारेणापि मम परीक्षा कृता । तथापि आस्थाने कञ्चन उद्योगं दातुं कः क्लेशः भवतः ?'' इति सञ्जीवः दैन्येन राजानं पृष्टवान् ।

तदा राजा हसन् उक्तवान् - ''भवान् धैर्यवान् इत्यत्र नास्ति संशयः । 'अहं सकलविद्याप्रवीणः' इति भावना अस्ति



भवतः । किन्तु कापि विद्या भवता पूर्णतया न अधीता । राजास्थाने उद्योगं प्राप्तुं या योग्यता अपेक्षिता सा भवति नास्ति इति तु सिद्धम् । तथापि भवता न चिन्तितं यत् 'गभीरम् अध्ययनं मम नास्ति' इति'' इति ।

सञ्जीवः राज्ञः वचनेन किञ्चित् निरुत्सुकः जातः । तथापि सः पुनः उक्तवान् - ''प्रभो ! अहं बहुशीघ्रमेव विद्यायाः ग्रहणं करोमि इति तु भवानपि जानाति एव किल ?'' इति ।

तदा राजा - ''सत्यम् । किन्तु तथा प्राप्तायां विद्यायां प्रावीण्यं कियत् इत्यपि भवता चिन्तनीयम् । राजास्थाने उद्योगं प्राप्तुं यत् प्रावीण्यम् आवश्यकं तत्र भवता प्रयत्नः न कृतः एव'' इति उक्तवान् ।

राज्ञः वचनेन सञ्जीवः अतीव दुःखितः

सन् उक्तवान् – "इदानीं मया आत्मनः दोषः ज्ञातः । या विद्या परिपूर्णतया ज्ञातव्या इति भवता उच्यते तस्याम् अहं प्रावीण्यं प्राप्तुम् एकाग्रचित्ततया प्रयत्नं करिष्यामि । कृपया राजास्थाने मह्यं कञ्चन उद्योगं ददातु" इति ।

"आरम्भे एव यदि एतादृशं चिन्तनं भवता कृतं स्यात् तर्हि एतावति काले राजास्थाने उद्योगं प्राप्तुं भवान् शक्तः अभविष्यत् । विद्यासु प्रावीण्यं प्राप्तुं यः विलम्बः कृतः तेनैव मम अभिप्रायः अपि अन्यः जातः । एतत्सर्वं भवतः दौर्भाग्यस्य फलमेव, न अन्यत्" इति राजा उक्तवान् ।

"तथापि भवन्तम् उद्दिश्य उद्योग-प्रार्थनविषये तु मया विलम्बः न कृतः । यतः भवान् एव राजा इति यदा ज्ञातं तदा एव मया उद्योगः प्रार्थितः" इति उक्तवान् सञ्जीवः ।

तदा राज्ञा उक्तम् – "आवयोः परिचयः मासात् पूर्वम् अभवत् । तदा तदा अहं राजास्थाने स्थितस्य उद्योगस्य विषयं वदन् आसम् । तथापि भवता एतत् न चिन्तितं यत् एषः कः, एषः राजास्थानस्य विषयं कथं ज्ञातुं प्रभवति, इति । अस्य कारणं तु – भवान् सर्वदा स्वविषयमेव चिन्तयति स्म । एकवारं मम विषये यदि चिन्तितं स्यात् तर्हि भवता मम परिचयः प्राप्तुं शक्यः अभविष्यत् । अन्यस्य विषयं ज्ञातुं यः विलम्बः भवता कृतः तेनैव कारणेन राजास्थाने उद्योगोऽपि न प्राप्तः" इति ।

एतत्सर्वं श्रुत्वा सञ्जीवः लज्जया शिरः अवनमय्य स्थितवान् । राज्ञः वचनानुगुणं सः स्वग्रामं गत्वा पित्रा क्रियमाणे कृषिकार्ये संलग्नः । तस्मिन् कार्ये महत् प्रावीण्यमपि सम्पादितं तेन । ततः राधया सह विवाहोऽपि सञ्जातः । सुखेन जीवनं यापयन् सः स्वेन अधीताः विद्याः ग्रामयुवकान् पाठितवान् । ते युवकाः अनेन सन्तुष्टाः सन्तः उक्तवन्तः – "यदि भवान् राजास्थाने उद्योगी अभविष्यत् तर्हि अस्माकं महती हानिः अभविष्यत् । यतः भवता विना वयम् एतादृश्या विद्यया वञ्चिताः भवेम । भवतः ग्रामं प्रति प्रत्यागमनमेव अस्माकं सौभाग्यम्" इति ।

मया अधीता विद्या व्यर्था न जाता इति सञ्जीवः अपि बहु सन्तुष्टः । तस्मिन् स्थितः अहम्भावः अपि नष्टः ।





# भल्लूकमान्त्रिकः

## २

*[कालीवर्मा नाम क्षत्रियः युवकः उद्योगान्वेषणाय गृहात् निर्गच्छति । मध्येमार्गं ग्रामीणानां मुखात् तेन लुण्ठाकानां वार्ता श्रुता । कालीवर्मा ग्रामीणानां तरुणानां साहाय्येन तान् लुण्ठाकान् विमर्दितवान् । एतदनन्तरं यदा सः नगरसमीपे आसीत् तदा राज्ञः जितकेतोः अश्वदलस्य भटाः आक्रम्य तं बन्दीकृतवन्तः । तदनन्तरम् ....]*

चन्द्रशिलानगरस्य अश्वदलीयाः भटाः कालीवर्मणा सह नगरं गतवन्तः । सैनिकाः कञ्चित् बद्ध्वा नयन्तः सन्ति इत्येतत् दृष्ट्वा केचन अश्वदलनायकं पृष्टवन्तः – ''एषः बन्धनग्रस्तः जनः कः ?'' इति ।

तदा अश्वदलस्य नायकः महता गर्वेण अवदत् – ''एतस्य नाम कालीवर्मा इति । एषः न केवलम् अस्माकं राज्यस्य, अपि तु प्रतिवेशिराज्यस्य उदयगिरेः अपि शत्रुः । अरण्ये महता श्रमेण अस्माभिः एषः कथमपि गृहीतः । अस्माभिः ऊढं कष्टं तु वर्णनातीतम्'' इति ।

कालीवर्मा चन्द्रशिलायाः उदयगिरेश्च शत्रुः इति ज्ञातवतां जनानां मनसि तदीयस्य वृत्तान्तस्य श्रवणे महत् कुतूहलम् उत्पन्नम् । अतः ते अश्वदलम् अनुसरन्तः राजभवन-पर्यन्तम् अपि गताः ।

यदा राजभवनं प्राप्तं तदा अश्वदलस्य नायकः कञ्चित् रक्षकभटम् आज्ञापितवान् यत् कालीवर्माणं बन्दीकृत्य अहम्



उपस्थितः अस्मि इति राजानं वदतु इति ।

तत्समये राजा प्रधानमन्त्रिणा सह प्रतिवेशिराजस्य आक्रमणविषये चर्चां कुर्वन् आसीत् । कालीवर्मणः बन्धनवार्ता यदा ज्ञाता तदा सः अवदत् – ''मन्त्रिवर्य ! कालीवर्मणः कारणतः प्रतिवेशिराजस्य विरोधः सम्मुखीकरणीयः अभवत् इति अहं चिन्तयन् आसम् । सौभाग्यवशात् सः इदानीं गृहीतः इति वार्ता श्रूयते । एतं वयं सजीवं दुर्मुखाय प्रेषयाम, उत शिरश्छेदनं कारयित्वा एतदीयं शिरः प्रेषयाम ?'' इति ।

''महाराज ! दुर्मुखस्य पत्रात् ज्ञायते यत् उभयमपि तस्य सम्मतम् एव इति । किन्तु लुण्ठाकान् उदयगिरिराज्यं प्रति प्रेषितवान् कालीवर्मा एषः एव वा न वा इति तु अद्यापि न स्पष्टम् । तत् स्पष्टतया अज्ञात्वा किमपि यदि क्रियेत तर्हि दुर्मुखः नूतनां विपत्तिम् उपस्थापयेत् खलु ?'' इति अवदत् मन्त्री ।

''अस्माकम् अश्वदलस्य नायकः वार्तां प्रेषितवान् अस्ति खलु – राजद्रोही कालीवर्मा गृहीतः इति ?'' इति अवदत् राजा ।

''कालीवर्मनामकाः अनेके भवितुम् अर्हन्ति एव । अतः भवता एतस्य विचारणा स्वयं करणीया । अस्मदपेक्षितः कालीवर्मा एषः एव इति निश्चित्य एव दण्डः विधातव्यः'' इति असूचयत् मन्त्री ।

एतदनन्तरं मन्त्री राजा च प्रकोष्ठात् बहिः आगतौ । राजभवनस्य पुरतः जनानां महान् गणः सम्मिलितः आसीत् । तं दृष्ट्वा राजा मन्त्री च आश्चर्यचकितौ । मन्त्रिणः आदेशस्य अनुगुणं अश्वदलनेता कालीवर्माणं बन्धविमुक्तं कृतवान् ।

कालीवर्मा अश्वात् अवतीर्य निर्भयतया राजानं मन्त्रिणं च पश्यन् अवदत् – ''महाराज ! भवतः सैनिकाः एते अरण्ये हठात् आक्रमणं कृत्वा मां बन्दीकृतवन्तः । यथोचितं दण्डयतु भवान् एतान्'' इति ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् जितकेतुः अवदत् – ''मम दशवर्षात्मके शासनावधौ कोऽपि अपराधी माम् एवं धृष्टतापूर्णानि वचनानि न उक्तवान्'' इति ।

तदा क्रुद्धः मन्त्री हस्तम् उन्नीय अवदत् – ''अये दुष्ट ! महाराजस्य अनुज्ञां विनैव भवान् किमपि यत् उक्तवान् तस्य निमित्तं शिरश्छेदः अपि विधीयेत । तथापि भवतः पूर्णं विवरणम् आवश्यकम् इत्यतः शिरश्छेदः न विहितः । चन्द्रशिलानगर-समीपे स्थिते अरण्ये वसतः लुण्ठाकान् किं

भवान् एव उदयगिरिराज्यं प्रति प्रेषितवान् ? भवतः नाम किम् ?'' इति ।

''मम नाम कालीवर्मा इति । अहम् एतस्यैव देशस्य प्रजाः अस्मि । देशस्य जनान् पीडयतः, तेषां सम्पत्तिं धान्यानि च अपहरतः लुण्ठाकान् अहं ग्रामीणतरुणानां साहाय्येन सम्मुखीकृतवान्, कांश्चन मारितवान् च इति तु सत्यम् एव । लुण्ठाकेषु केचन अस्मद्राज्यस्य सीमाम् अतिक्रम्य उदयगिरिराज्यस्य अरण्यं प्रविष्टवन्तः स्युः अपि । किन्तु ते प्रतिवेशिराज्यस्य अरण्यं प्रविष्टवन्तः यत् तस्य प्रत्यक्षकारणम् अहं कथं स्याम् ?'' इति धैर्येण अपृच्छत् कालीवर्मा ।



एतत् श्रुत्वा नितरां क्रुद्धः मन्त्री राजानम् अवदत् – ''महाराज ! मया यत् पृष्टं तस्य उत्तरं धाष्ट्र्येन दत्तवान् एषः माम् एव प्रतिपृच्छति अपि । अतः एषः योग्येन दण्डेन दण्डनीयः'' इति ।

राजा जितकेतुः कालीवर्माणं सकृत् तीक्ष्णदृष्ट्या दृष्ट्वा अवदत् – ''यस्मै अस्माभिः दण्डः देयः अस्ति सः कालीवर्मा एषः एव । अये कालीवर्मन् ! मम अनुज्ञां विनैव भवता मम काश्चन प्रजाः मारिताः । प्रतिवेशिराजस्य शत्रुतायाः कारणम् अपि भवान् जातः । अतः अहं भवतः शिरश्छेदम् आदिशामि'' इति ।

एतम् आदेशं श्रुत्वा दिग्भ्रान्तः कालीवर्मा क्षणकालं यावत् मौनेन स्थित्वा पुनः अवदत् – ''महाराज ! कस्य न्यायसूत्रस्य आधारेण मह्यम् एषः दण्डः विहितः ? मम पिता भवत्पितृपादानाम् आस्थाने कार्यं कुर्वन् युद्धे स्वस्य प्राणान् अत्यजत् । भवतः आस्थाने उद्योगः करणीयः इति उद्देशेन अहं ग्रामं परित्यज्य एतावद्दूरम् आगतः । जनान् पीडयतां लुण्ठाकानां संहारः यः मया कृतः तदर्थं किम् एषः मृत्युदण्डः दीयते ? किम् एतत् उचितम् ?'' इति ।

''भवता औद्धत्यम् आचर्यते'' इति तम् उक्त्वा मन्त्री भटान् पश्यन् अवदत् – ''भवन्तः महाराजस्य आदेशं श्रुतवन्तः एव खलु ? एतं कालीवर्माणं नगरसीमायां स्थिते शिरीषवने शूलम् आरोप्य एतस्य शिरः उदयगिरिराजाय उपायनीकुर्वन्तु'' इति ।

मन्त्रिणः एतत् वचनं श्रुतवतां जनानां मध्ये कोलाहलः उत्पन्नः । केचन उच्चस्वरेण पृष्टवन्तः – ''किम् एतत् अन्याय्यं महाराज ! कालीवर्मणे विहितस्य दण्डस्य विषये पुनश्चिन्तनं क्रियताम् । स तु जनानाम्



उपकारम् एव कृतवान् अस्ति'' इति ।

''अहो, आश्चर्यकरम् एतत् ? महाराजम् एव उपदेष्टुम् अर्हाः महाविवेकिनः बहवः सन्ति एतस्मिन् नगरे !'' इति उक्त्वा मन्त्री क्रोधेन आज्ञापितवान् – ''कोलाहलं कुर्वतः एतान् गृहीत्वा कारागारे स्थापयन्तु'' इति ।

मन्त्रिणः आदेशं प्राप्य अश्वारोहिणः केचन भटाः कशां गृहीत्वा जनसमूहं प्रविष्टवन्तः । एतत् दृष्ट्वा भीताः जनाः इतस्ततः धावितवन्तः । एतेन नितरां सन्तुष्टः राजा जितकेतुः प्रसन्नतापूर्वकं मन्दहासं प्रकटयन् – ''असभ्यान् जनान् योग्ये मार्गे स्थापयितुं दण्डनीतिः एव आवश्यकी । भवता योग्यः आदेशः दत्तः मन्त्रिवर्य !'' इति मन्त्रिणः श्लाघनं कृत्वा स्वभवनं प्रति गतवान् । मन्त्री अपि तम् अनुसृतवान् ।

जनानां समूहं दूरं प्रेषयित्वा अश्वदल-नायकः कालीवर्मणः समीपम् आगत्य अवदत् – ''भवता राज्ञः आदेशः श्रुतः खलु ? अल्पे एव वयसि इहलोकत्यागः निश्चयेन अस्ति विषादकरः । पराधीनाः वयं किं वा करवाम ? राजाज्ञा पालनीया एव अस्ति अस्माभिः'' इति ।

मन्त्रिणः आदेशस्य श्रवणात् नितरां क्रुद्धः आसीत् कालीवर्मा । सः कोषात् खड्गम् आकृष्य, पुनः किमपि विचिन्त्य खड्गं कोषे एव संस्थाप्य अवदत् – ''भवतां राज्ञः आदेशः कथम् अविवेकपूर्णः अस्ति इत्यंशः भवतु केनापि न चिन्त्यते । प्रतिवेशिराजतः भीतः भवतां राजा जनानां हितं कृतवन्तं मां शूलम् आरोपयन् अस्ति । किं महत् अन्याय्यं न एतत् ?'' इति ।

''राज्यस्य हितं कस्मात् इति राजा एव जानाति । वयम् अल्पाः किं वा जानीयाम ? गच्छाम तावत् शिरीषवनं प्रति। तस्य प्राप्तितः पूर्वम् एव राजा शूलारोपणदण्डस्य आदेशं प्रतिषिध्येत् अपि। कस्य भाग्यं कथम् इति केन वा ज्ञायते ? इतःपूर्वं केचन एतादृशम् आदेशं प्राप्य सजीवं स्थितवन्तः अपि'' इति अवदत् अश्वदलस्य नेता ।

कालीवर्मा तु शूलारोपणनिषेधाज्ञायाः प्रतीक्षां न करोति स्म । सः चिन्तयति स्म यत् केनचित् उपायेन सैनिकेभ्यः आत्मनः रक्षणं साधयित्वा पलायनं करणीयम् इति । नगर-सीमायाः अनन्तरम् एतादृशः प्रयासः कृतः चेत् वरं स्यात् इति निर्णीतवान् आसीत् सः ।

अश्वदलस्य नेता स्वस्य अनुचरान् 'सावधानाः भवन्तु' इति आदिश्य काली-

वर्माणम् उद्दिश्य अवदत् - ''इदानीं निगडेन भवतः हस्तौ बन्द्धव्यौ अस्माभिः'' इति ।

''अल्पे एव काले प्राणत्यागं कुर्वतः मम हस्तयोः निगडबन्धनेन किम् ? अहं पलायनं कुर्याम् इति भीतिः खलु भवताम् ? तर्हि स्वीक्रियताम् एषः मम खड्गः । आयुध-सहितैः भवद्भिः आवृतः निरायुधः अहं कथं वा पलायनं कुर्याम् ?'' इति उक्त्वा कालीवर्मा स्वस्य कोषे स्थितं खड्गं निष्कास्य अश्वदलनायकाय अर्पितवान् ।

अश्वदलनेता सन्तुष्टः सन् - ''कालीवर्मन् ! मृत्युदण्डं प्राप्नुवतः अन्तिमायाः इच्छायाः पूरणं पुण्यकरम् इति वचनं श्रूयते । अतः भवतः प्रार्थना पुरस्क्रियते मया । दश जनाः वयं भवन्तं परितः तिष्ठामः । यदि पलायनाय कोऽपि प्रयत्नः क्रियेत तर्हि अस्माकं खड्गाः भवतः शरीरं छिन्नविच्छिन्नं करिष्यन्ति'' इति अवदत् ।

एतदनन्तरं कालीवर्मणः पुरतः पञ्च सैनिकाः स्थितवन्तः, पृष्ठतः अपि तथैव । ततः शिरीषवनं प्रति प्रयाणम् आरब्धम् । जनाः एतत् दूरात् पश्यन्तः राज्ञः निन्दनं कृतवन्तः । घण्टानन्तरं कालीवर्मा सैनिकाः च शिरीषवनं प्राप्तवन्तः । वनात् अनतिदूरे कश्चन पर्वतः आसीत् । तस्मात् निर्गता निर्झरी शिलानां मध्यतः प्रवहन्ती त्रिपुरुष-परिमाणमितात् औन्नत्यात् अधः पतन्ती महान्तं शब्दं करोति स्म ।

अश्वारोहिभिः सह तत् वनं प्रविश्य पलायनाय कोऽपि मार्गः दृश्येत किम् इति परितः परिशीलयन् कालीवर्मा भटान् अपृच्छत् - ''मम शूलारोपणम् अत्रैव किमर्थं क्रियते भवद्भिः ?'' इति ।

अश्वदलनायकः एतस्य उत्तररूपेण यावत् किमपि वक्तुम् उद्युक्तः तावता महिषारूढः कश्चन कृष्णः आकारः तत्र



दृष्टिगोचरतां गतः । सः आपादमस्तकं कृष्णवर्णीयं वस्त्रं धृतवान् आसीत् । यत्र नेत्रे भवतः तत्र रन्ध्रे आस्ताम् ।

महिषम् आरूढवान् सः जनः परशुम् उन्नीय अश्वारोहिणां समीपम् आगत्य उच्चस्वरेण अपृच्छत् - ''के भवन्तः ? एतस्मात् प्रधानवधकात् मत्तः मरणं प्राप्तवन्तः प्रेताः, उत नूतनतया शिरश्छेदं कारयितुम् आगताः जनाः ?'' इति ।

वेगेन आगच्छतः घोरस्य वृषभस्य दर्शनात् भीताः अश्वाः हेषारवं कुर्वन्तः इतस्ततः धावितवन्तः । 'इतः पलायनाय अयं योग्यं कालः' इति चिन्तयन् कालीवर्मा यावत् स्वस्य अश्वं प्रेरयितुम् उद्युक्तः तावता महिषारूढः जनः वेगेन अग्रे आगत्य तस्य अश्वस्य खलीनं गृहीत्वा अवदत् - ''शिरीषवृक्षः भूतप्रेतादीनां प्रियः । अतः एव राजा लुण्ठाकान्, देशद्रोहिणः च शिरश्छेदाय अत्रैव प्रेषयति । भवान् लुण्ठाकः उत, देशद्रोही ?'' इति ।

''अहं न लुण्ठाकः, न वा देशद्रोही । भवान् कीदृशः पिशाचः इति आदौ वदतु'' इति वदन् कालीवर्मा तस्य हस्तात् खलीनम् आक्रष्टुं प्रयासं कृतवान् । इतस्ततः गताः अश्वारोहिणः अत्रान्तरे तत्र आगताः । अश्व-दलस्य नेता महिषारूढं क्रोधेन अपृच्छत् - ''अये, किम् एतत् औद्धत्यं भवतः ? किं भवान् पिशाचाविष्टः अस्ति ?'' इति ।

तदा महिषारूढः सः जनः कालीवर्मणः अश्वस्य खलीनं परित्यज्य - ''प्रधानवधकं माम् एव किं भवान् 'अये' इति सम्बोधयति ? राजा कदाचित् भवतः अपि शिरश्छेदनम् आदिशेत् । तदा अहं भवतः शिरः निर्दयं कर्तयिष्यामि'' इति ।

''अये ! किं माम् एव अपमानयति भवान् ?'' इति वदन् अश्वदलनायकः कोषात् खड्गम् आकृष्टवान् । तावता कालीवर्मा महिषारूढस्य हस्तात् बलात् खड्गम् आकृष्य अश्वदलनायकस्य कण्ठम् उद्दिश्य प्रयुक्तवान् । तस्मात् अश्वदल-नायकस्य कण्ठः शरीरात् पृथग्भूतः ।

तदा दूरतः ध्वनिः श्रुतः - ''आदि-भल्लूकः जयतात् । हे युवक ! भवान् महा-पराक्रमी अस्ति'' इति । *(अनुवर्तते)*





## वेताल-कथा

# अनन्तस्य आकाङ्क्षा

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्, शाखायां लम्बमानं शवं स्कन्धे आरोप्य पुनरपि श्मशानं प्रति प्रस्थितवान् मौनेन । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवान् विद्यावान् अनुभवी च अस्ति । तथापि एतस्मिन् श्मशाने अनावश्यकतया कष्टानि सहते ! एतत्सर्वं किमर्थं क्रियते इत्येव न ज्ञायते मया । कोऽपि स्वस्य दुरिच्छायाः साधनाय भवन्तम् अत्र प्रवर्तितवान् न स्यात् खलु ? पूर्वम् अनन्तनामकः कश्चन भवान् इव एव अन्यस्य दुरिच्छायाः पूरणाय प्रवृत्तः सन् हानिम् अनुभूतवान् । भवतः मार्गायासस्य परिहाराय तस्य कथां श्रावयामि । श्रद्धया शृणोतु'' इति ।

अनन्तरं वेतालेन कता आरब्धा -



पूर्वं सत्कीर्तिः नाम राजा मन्दारकदेशं पालयति स्म । नीरजः तस्य एकमात्रपुत्रः । सत्कीर्तिः नीरजं बाल्ये एव गोविन्दनामकस्य गुरोः आश्रमं प्रति प्रेषितवान् अध्ययनाय ।

गुरुकुले दश विद्यार्थिनः आसन् । तत्र सर्वे नीरजविषये महान्तम् आदरं प्रकटयन्ति स्म, ऋते अनन्तात् । राजकुमारः यदि अस्मासु कुपितः भवेत् तर्हि अस्मान् दण्डयेत् इति भीतिः आसीत् तेषाम् । अतः एव ते तस्मिन् आदरं दर्शयन्तः तस्मात् दूरे एव तिष्ठन्ति स्म । किन्तु अनन्तः प्रथमदिनात् एव नीरजे स्नेहवान् जातः । शान्तस्वभावः अनन्तः नीरजस्य प्रियः जातः । तयोः मैत्री दिने दिने वर्धते स्म ।

'अहं राजकुमारः अस्मि' इति गर्वः आसीत् नीरजे । सः मूर्खः अपि आसीत् । अतः सः कदाचित् अनन्तम् अपि आदिशति स्म दर्पेण । तथापि कोपम् अप्राप्नुवन् अनन्तः मैत्रीयुक्तव्यवहारम् एव करोति स्म ।

गुरुणा बोध्यमानाः विषयाः नीरजेन न अवगम्यन्ते स्म । तथापि 'न अवगतम्' इति भावं सः गुरोः पुरतः न प्रकाशयति स्म । विरामावसरे सः तमेव विषयम् अनन्तस्य पाठनात् अवगच्छति स्म । अनन्तः उत्तमतया पाठयति स्म । यदि नीरजेन न अवगतम् इति अनुभवः भवति तर्हि अनन्तः अन्यैः प्रकारैः पुनरपि बोधयति स्म ।

एतस्मात् नीरजे पठनासक्तिः प्रवृद्धा । शिक्षणे नीरजस्य आसक्तेः वृद्धिं दृष्ट्वा गुरुः गोविन्दः प्रोत्साहनदृष्ट्या कक्ष्यायां नीरजस्य प्रशंसाम् अपि कृतवान् । गुरोः प्रशंसां प्राप्तवान् नीरजः सन्तोषेण अनन्तम् अवदत् – ''मित्र अनन्त ! अद्य गुरुणा मम प्रशंसा कृता । अत्र भवतः बोधनम् एव मुख्यं कारणम् । भवतः उपकारं कदापि न विस्मरिष्यामि अहम् । यदा अहम् एतस्य देशस्य राजा भविष्यामि तदा भवन्तं प्रधानमन्त्रिणं करिष्यामि'' इति ।

नीरजस्य कथनात् अनन्तः नितरां सन्तुष्टः । एतां घटनां ज्ञातवान् गुरुः नीरजस्य प्रशंसां पुनरपि कुर्वन् अवदत् – ''वत्स ! मानवान् पशुभ्यः पृथक्करोति कृतज्ञता । भवतः औदार्यं प्रशंसार्हम् अस्ति । अनन्तविषये कृतज्ञताप्रकटनं यत् भवता चिन्तितं तत् तु भवतः श्रेष्ठतां द्योतयति । अनन्ताय दत्तं वचनं कदापि न विस्मर्तव्यम्'' इति ।

नीरजः अङ्गीकारपूर्वकं शिरः चालित-



वान् । किन्तु एतदनन्तरकाले याः घटनाः प्रवृत्ताः ताः तु एतदनुगुणाः न आसन् । शिक्षाक्षेत्रे नीरजः यथा यथा प्रवृद्धः तथा तथा तस्य अहङ्कारः अपि प्रवृद्धः । यावत् तस्य विद्याभ्यासः समाप्तः तावता सर्वे अवगतवन्तः यत् एषः दत्तस्य वचनस्य पालनं न करिष्यति इति ।

गुरुकुलस्य विद्याभ्यासः यदा समाप्तः तदा अनन्तः गुरुम् अवदत् - ''आचार्यवर्य ! मम ज्ञानपिपासा इतोऽपि न उपशान्ता । यदि भवतः अनुज्ञा स्यात् तर्हि अहम् अरावलीपर्वतसमीपस्थे कृष्णचन्द्रवर्यस्य गुरुकुले इतोऽपि किञ्चित्कालं विद्याभ्यासं कर्तुम् इच्छामि । तदनन्तरम् एव आवश्यकतायां सत्यां नीरजं वचनदानं स्मारयिष्यामि'' इति ।

गुरुः गोविन्दः एतत् श्रुत्वा महान्तम् आनन्दं प्रकटयन् - ''वत्स ! तस्य श्रेष्ठस्य आचार्यस्य शिष्यत्वं प्राप्तं चेत् भवतः योग्यता निश्चयेन वर्धिष्यते । भवतः जीवनं सार्थकं भविष्यति । अतः भवतः तत्र गमनं सन्तोषाय एव । मम आशीर्वादः अस्ति एतद्विषये'' इति अवदत् ।

नीरजः अपि गुरुदक्षिणां समर्प्य राजधानीं प्रतिगतवान् । पञ्चषाणि वर्षाणि अतीतानि । तस्य राज्याभिषेकः सम्पन्नः । राजा जातः सः सुप्रतीकनामकं मार्गदर्शकस्थाने नियोजितवान् । सुप्रतीकः चतुरः । राज्ञः प्रीतिः कथं सम्पादनीयः इति सः जानाति स्म । अतः अल्पे एव काले सः राज्ञः विश्वासपात्रं जातः । राजा तस्य कथनं वेदवाक्यं मन्यते स्म ।

सुप्रतीकः राजा च सम्भूय विविधान् नूतनान् नियमान् व्यवहारपथम् आनीतवन्तौ । ते सर्वे जनानां प्रीतये न जाताः । तस्मात् जनाः असन्तुष्टाः । केचन तु प्रत्यक्षं राजविरोधं कर्तुम् उद्युक्ताः । एतस्याः स्थितेः लाभं प्राप्तुं शत्रुराजः सन्नद्धः एव आसीत् । शत्रुराजस्य आक्रमणं यदाकदाचिदपि भवितुम् अर्हति इति यदा ज्ञातं तदा नीरजः नितरां भीतः । एतस्य अपायस्य निवारणं कथम् इति सः सुप्रतीकं पृष्टवान् ।

एषा महती समस्या न इति सुप्रतीकस्य विचारः । सः लाघवबुद्ध्या अवदत् - ''एतद्विषये भीतिः किमर्थं महाराज ? अधिकं वेतनं दत्तं चेत् तरुणाः अहमहमिकया सेनां प्रवेक्ष्यन्ति । एवं सेना यदा सिद्धा भविष्यति तदा वयम् एव



प्रथमाक्रमणं करवाम । तेन शत्रुराज्यम् अपि अस्मदधीनं भविष्यति । भवतः कीर्तिश्च सर्वत्र प्रसरिष्यति'' इति ।

''भवान् चिन्तयति यत् कनिष्ठिकया निर्वर्तयितुं शक्या समस्या एषा इति । किन्तु किं भवान् जानाति यत् कोषागारे अधिकं धनं नास्ति इति ?'' इति अपृच्छत् राजा ।

तदा उच्चैः हसन् अवदत् सुप्रतीकः – ''धनागारस्य पूरणाय अपि अस्ति एव सरलः उपायः । दक्षिणीयपर्वतविषये भवान् जानाति एव'' इति ।

नीरजः दक्षिणीयपर्वतविषयं जानाति स्म एव । मन्दारकदेशस्य उत्तरभागे यः महापर्वतः दृश्यते सः 'दक्षिणीयः पर्वतः' इति उच्यते स्म । तस्य पर्वतस्य शिखरे एकं प्राचीनं मन्दिरम् अस्ति । तस्य मुखमण्डपे कश्चन देवनागरीलिप्या लिखितः शिलालेखः अस्ति । तत्र लिखितम् अस्ति – 'मन्दिरस्य पुरतः स्थिते सरोवरे वेगेन भ्रमन् कश्चन आवर्तः अस्ति । मन्त्रतन्त्रज्ञः साहसी निःस्वार्थः कोऽपि आवर्तं प्रविश्य तत्रत्यां रक्षिकां योगमायां यदि जेष्यति तर्हि नव निधीन् प्राप्स्यति । यः पराजितः भविष्यति सः नरके पतिष्यति' इति ।

सुप्रतीकस्य वचनस्य श्रवणात् राज्ञा नीरजेन एतत्सर्वं स्मृतम् । सः नीरसस्वरेण अवदत् – ''दक्षिणीयपर्वतविषयकस्य ज्ञानेन किं वा प्रयोजनम् ? स्वप्राणान् पणीकृत्य सरोवरे प्रवेष्टुम् अहं तु न शक्नोमि'' इति ।

तदा सुप्रतीकः हसन् अवदत् – ''प्रभो ! तत्र भवता गन्तव्यं नास्ति । मया श्रुतं यत् अनन्तनामकः अरावलीपर्वतप्रदेशे स्थितस्य कृष्णचन्द्रस्य गुरुकुले मन्त्रतन्त्रादीनां गभीरम् अध्ययनं कृतवान् अस्ति इति । सः शास्त्रपारङ्गतः अपि । कस्तूरीगुप्तस्य गृहे सः इदानीम् अतिथित्वेन वसति इति मया श्रुतम् । तस्य साहसशीलता निःस्वार्थता चापि प्रसिद्धा अस्ति । राज्यस्य हिताय दक्षिणीयपर्वतः गन्तव्यः भवता इति भवान् तं वदतु । निधिसहिततया प्रत्यागतं चेत् सहस्रं सुवर्णनाणकानि दास्यन्ते इत्यपि वदतु । तदा भवतः अभीष्टं सिद्धं भविष्यति'' इति ।

अनन्तस्य नाम्नः श्रवणात् नीरजः क्षणकालं स्तब्धः । ततः सः सुप्रतीकस्य प्रस्तावम् अङ्गीकृतवान् । अनन्तरक्षणे एव अनन्ताय सन्देशः प्रेषितः तेन ।

यदा अनन्तः आगतः तदा नीरजः महता प्रेम्णा तम् आलिङ्गितवान् । ततः दक्षिणीय-

पर्वतस्य विषये समग्रं विवरणम् उक्त्वा धनस्य आवश्यकताम् अपि निवेदितवान् । तदा अनन्तः अवदत् - ''महाराज ! आवां परस्परं जानीवः । भवदिच्छायाः पूर्तये अहम् अवश्यं तत्र गमिष्यामि'' इति ।

दत्तस्य वचनस्य अनुगुणं सः दक्षिणीय-पर्वतं गतवान् । मन्त्रं जपन् सरोवरं प्रविष्ट-वान् च । राजा नीरजः अपि अनन्तेन सह आगतवान् आसीत् । सरोवरतीरे उपविश्य सः अनन्तस्य आगमनं प्रतीक्षमाणः उपविष्टवान् । अल्पे एव काले अनन्तः सरोवरतः बहिः आगतवान् । तस्य मुखं प्रसन्नं कान्त्या विलसत् च आसीत् ।

नीरजः झटिति अनन्तस्य समीपम् आगत्य उत्कण्ठापूर्वकं पृष्टवान् - ''अनन्त ! निधिः कुत्र अस्ति ?'' इति ।

अनन्तः मन्दहासपूर्वकम् उक्तवान् - ''आगच्छतु मया सह । निधिं दर्शयिष्यामि । अपायः कोऽपि नास्ति । अतः भीतिः प्राप्तव्या नास्ति भवता'' इति । ततः सः नीरजस्य हस्तं गृहीत्वा पुनः सरोवरं प्रविष्टवान् । सरोवरे सूर्यकिरणैः इव प्रकाशमानः नवानां रत्नानां राशिः एव नीरजेन दृष्टः । नीरजः आश्चर्यचकितः सन् तं राशिम् अपश्यत् ।

तदा अनन्तः शान्तस्वरेण अवदत् - ''प्रभो ! मया एते निधयः प्राप्ताः । देशस्य कल्याणाय एतान् अहं भवदधीनान् करोमि । प्रतिफलरूपेण भवता मह्यं सुवर्ण-नाणकानि दातव्यानि न सन्ति'' इति ।

''एवं तर्हि किम् इष्यते भवता ?'' इति आश्चर्येण पृष्टवान् नीरजः ।



"पूर्वं गुरुकुले भवता एकं वचनं दत्तम् आसीत् । तदनुगुणम् अहं प्रधानमन्त्रिस्थाने नियोजनीयः भवता । एषा एव मम अपेक्षा" इति गम्भीरस्वरेण अवदत् अनन्तः ।

एतत् श्रुतवतः नीरजस्य मुखं गम्भीरं जातम् । सः शिरः अवनमय्य अनन्तस्य पादौ स्पृष्ट्वा अवदत् – "महानुभाव ! भवान् साधारणः मानवः न । इतः परं भवान् एव मम प्रधानमन्त्री । भवतः अनुमतिं विना लघु कार्यम् अपि न क्रियते मया" इति ।

वेतालः एवं कथां समाप्य अवदत् – "राजन् ! निधिप्राप्तौ नीरजस्य स्वार्थः सुस्पष्टः । किन्तु अनन्तस्य व्यवहारः एव खलु विलक्षणः ? यदि सः निस्स्वार्थी स्यात् तर्हि प्रतिफलापेक्षां विना निधिं राज्ञे समर्प्य ततः मौनेन निर्गच्छेत् । सः जानाति स्म यत् नीरजस्य व्यवहारः योग्यः न इति । तथापि मुख्यमन्त्रित्वं किमर्थं प्रार्थितं तेन ? राजा अपि किमर्थम् अनन्तस्य पादौ गृहीत्वा तस्मै मुख्यमन्त्रित्वम् अर्पितवान् ? मम एतेषां सन्देहानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् – "देशस्य हितम् एव इच्छन् अनन्तः निस्स्वार्थः इत्यत्र नास्ति एव सन्देहः । अतः एव सः गुरुकुले नीरजस्य साहाय्यं कृतवान् । नीरजः असमर्थः अविवेकी च स्यान्नाम, तथापि देशस्य हितं चिन्तयता अनन्तेन प्रधानमन्त्रिस्थानम् अभ्यर्थितम् । यदा कोषः रिक्तः अस्ति तदा तस्य पूरणाय प्रयासः योग्यः । अतः अनन्तः निध्यानयने प्रवृत्तः, न तु प्रतिफलाशया । शत्रुः आक्रमणार्थं यदा सन्नाहं कृतवान् अस्ति तदा योग्यं मार्गदर्शनम् अस्ति चेदेव देशः रक्षितः भवेत् । तस्मात् अनन्तेन तत् पदं प्रार्थितम्, न तु पदव्यामोहेन । राज्ञा अनन्तस्य आशयः अवगतः । अतः सः अनन्तस्य पादौ गृहीतवान् । अनन्तस्य या अपेक्षा सा निश्चयेन अस्ति विवेकपूर्णा, देशहितैकदृष्ट्या कृता च" इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।



# वार्ताविशेषः

## नाशदशायां स्थितायां जातौ वृद्धिः




डान्लाङ्गर्जातिः अपायदशां गता काचित् पशुजातिः । सन्तोषस्य विषयः नाम सिङ्गपुरस्थे मृगालये स्थिता तज्जातीया द्वितीयं शिशुं प्रसूतवती इति श्रूयते । एतज्जातीयाः वियेट्नाम्-लाबोस्प्रदेशेषु आधिक्येन दृश्यन्ते । सिङ्गपुरे जातौ शिशू बहूनाम् अवधानपथम् आकर्षतः । एतस्य अपरम् अपि कारणम् अस्ति । मृगालयव्यवस्थापकाः घोषितवन्तः सन्ति यत् एतयोः कृते योग्यं नाम यः सूचयति तस्मै पारितोषिकं दास्यते इति ।

## ट्रेन्याने तिरुक्कुरल्पठनम्

एषु दिनेषु नूतनं किञ्चन ट्रेन्यानम् आरब्धम् अस्ति । तत् कन्याकुमारीतः नवदेहलीपर्यन्तं सञ्चारं करिष्यति । तिरुक्कुरल् एक्स्प्रेस् इति तस्य नाम । प्रस्थानानन्तरं चतुर्थे दिने तत् राजधानीं प्राप्नोति ।

एतस्य प्रथमप्रयाणे पञ्चवर्षीया पि. प्रतीक्षा अपि प्रयाणं कृतवती । सा कन्याकुमारीसमीपस्थे कोलच्चुरुप्रदेशे जाता । प्रयाणावसरे सा विंशत्यधिकान् यानप्रकोष्ठान् गतवती कुरल्श्लोकान् जनान् श्रावयन्ती । यावत् प्रयाणं समाप्तं तावता सा तिरुक्कुरल्ग्रन्थस्य १३३० पद्यानि गीतवती आसीत् । एषः ग्रन्थः तिरुवल्लुवरवर्येण २००० वर्षेभ्यः पूर्वं विरचितः आसीत् ।



# तृतीयः वरः

विपुलः चन्द्रकान्तः च आत्मीयौ सुहृदौ। कदाचित् तौ मार्गस्य पार्श्वे उपविश्य जल्पनं कुरुतः स्मः। तदा कश्चित् अपरिचितः आगत्य अवदत् - ''वज्राङ्गुलीयकस्य क्रयणे किं भवन्तः समुत्सुकाः ?'' इति।

चन्द्रकान्तः कश्चन सामान्यः शिक्षकः। सः वज्राङ्गुलीयकस्य क्रयणे अनासक्तः। विपुलः धनिककुटुम्बे जातः। सः तत्र आसक्तिं प्रदर्शितवान्। ''एतत् वज्राङ्गुलीयकं कुतः प्राप्तं भवता ?'' इति अपृच्छत् सः।

''तत् अहं न वदामि। यदि भवतोः अन्यतरः कोऽपि एतत् क्रेतुं न इच्छति तर्हि अहं सुवर्णकारस्य कस्यचित् समीपं गमिष्यामि। अहं तु त्वरया धनम् इच्छामि। अतःभवतोः समीपम् आगतवान्'' इति अवदत् सः अपरिचितः।

विपुलः अवदत् - ''भवान् मम गृहम् आगच्छतु। अहं तत्र क्रेष्यामि'' इति।

सः अपरिचितः सन्तोषेण विपुलम् अनुसृतवान्। चन्द्रकान्तः अपि तेन सह गतः। विपुलः तस्य नूतनस्य विषये महतीं मैत्रीं प्रदर्शयन् तस्मै वज्राङ्गुलीयकस्य मूल्यं दत्तवान्। यदा नूतनः ततः प्रस्थातुम् उद्युक्तः तदा सः - ''इदानीं तु रात्रिः आसन्ना इव। एतावत् धनं स्वीकृत्य रात्रौ गमनं न श्रेयसे'' इति अवदत्। चन्द्रकान्तः अपि विपुलस्य कथनम् एव अनूच्चारितवान्। तस्मात् सः नूतनः विपुलस्य गृहे वासम् अङ्गीकृतवान्।

किञ्चित्कालानन्तरं चन्द्रकान्तः स्वगृहं प्रति गतवान्। विपुलः नूतनाय भूरिभोजनं व्यवस्थापितवान्। भोजनानन्तरं मद्यव्यवस्था अपि तेन कृता। नूतनेन प्रभूतं मद्यं पीतम्। विपुलस्य आतिथ्येन नितरां सन्तुष्टः सः वज्राङ्गुलीयकप्राप्तिरहस्यम् उद्घाटितवान्।



"इतः समीपे एव स्थिते अरण्ये कश्चन तान्त्रिकः अस्ति । सः इच्छापूर्वकस्य वरस्य प्राप्तये मार्गम् उपदेष्टुं समर्थः । प्रतिमासं सः अमावास्यायां पूर्णिमायां च मध्यरात्रे कञ्चित् यज्ञं करोति । यज्ञस्य भस्म अभिमन्त्र्य ददाति सः । तत् कथमपि ज्ञात्वा अहं तं सन्तोषितवान् । तस्मात् सन्तुष्टः सः तान्त्रिकः यज्ञभस्म दत्त्वा इदानीम् एव त्रीन् वरान् प्रार्थयतु इति उक्तवान् । तस्मिन् समये मया किं प्रार्थनीयम् इति न ज्ञातम् । अहं वज्राङ्गुलीयकमात्रं प्रार्थितवान् । किन्तु तावता कालः अतीतः आसीत् । साम्राज्यम् एव न प्रार्थितं खलु इति अनन्तरकाले खेदः अनुभूतः मया" इति अवदत् सः नूतनः ।

अनन्तरदिने प्रातः उपाहारस्य अनन्तरं सः स्वगृहं प्रति गतवान् ।

विपुलः तान्त्रिकसमीपं गन्तुम् ऐच्छत् । एकाकितया गमने भीतिः तस्य । अतः सः चन्द्रकान्तं स्वगृहं प्रति आहूय अवदत् - "भवता मया सह आगन्तव्यम्" इति ।

एतादृशेषु विषयेषु चन्द्रकान्तस्य आसक्तिः न आसीत् । सः विपुलम् अबोधयत् - "भोः, भगवता भवते प्रभूता सम्पत्तिः दत्ता अस्ति । यावत् अस्ति तावता सन्तोष्टव्यम् । किमर्थम् एवम् अत्याशा भवतः ? विद्यमानेन धनेन सुखेन निष्कपटजीवनं यापयतु" इति ।

"मया धनम् एव प्रार्थ्यते इति किमर्थं चिन्त्यते भवता ? अहम् अन्यत् किमपि प्रार्थयेयम्" इति अवदत् विपुलः ।

"मित्र ! लोके वस्तूनि द्विधा प्राप्यन्ते । एकं तु परिश्रमेण अस्माभिः सम्पादनीयम् । अथवा सहजमार्गेण तदेव स्वयम् अस्मत्समीपम् आगच्छेत् । भवता यत्



तान्त्रिकतः प्राप्तुम् इष्यते तत् पूर्वोक्तात् मार्गद्वयात् अतिरिक्तेन क्रमेण प्राप्यमाणम् । एतादृशेन मार्गेण यत् प्राप्यते तस्य परिणामः कदाचित् खेदजनकः अपि भवितुम् अर्हति" इति अवदत् चन्द्रकान्तः ।

तान्त्रिकेण मेलनीयम् इत्येषः विपुलस्य सङ्कल्पः एतस्य श्रवणस्य अनन्तरम् अपि शिथिलः न जातः । चन्द्रकान्तः अनन्यगतिकतया विपुलम् अनुसृतवान् ।

अमावास्यायाः रात्रौ तौ अरण्यं प्रविष्टवन्तौ । तान्त्रिकस्य कुटीरम् अपि प्राप्तं ताभ्याम् । तान्त्रिकः तयोः विषये आदरं प्रदर्शितवान् । अरण्ये गमनसमये एतौ मार्गभ्रष्टौ स्याताम् इति विचिन्त्य फलादिदानेन तौ सत्कृतवान् सः । तदनन्तरं सः तौ अवदत् - "भवन्तौ मम कुटीरे वसन्तौ एतां रात्रिं यापयितुम् अर्हतः । अहं कस्यचित् यज्ञस्य निमित्तम् इदानीम् उद्युक्तः अस्मि ।



यज्ञस्य समाप्तेः अनन्तरम् अहम् एतत् अरण्यं त्यक्ष्यामि'' इति ।

''आर्य ! किमर्थम् एतत् अरण्यं परित्यज्य गम्यते भवता ?'' इति अपृच्छत् विपुलः ।

''प्रतिमासम् अमावास्यायां रात्रौ मया कश्चन यज्ञः क्रियते । अद्यतनः यज्ञः समाप्तः चेत् मया इष्टा सिद्धिः प्राप्यते । अतः अहं यज्ञानन्तरम् इतः निर्गच्छन् अस्मि'' इति अवदत् तान्त्रिकः ।

''भवता अभिमन्त्र्य दत्तं भस्म गृहीत्वा यदि कश्चित् त्रीन् वरान् प्रार्थयते तर्हि तस्य इष्टार्थाः सिद्धाः भवन्ति इति मया श्रुतम् । किमेतत् सत्यम् ?'' इति अपृच्छत् विपुलः ।

तान्त्रिकः विपुलम् आश्चर्यपूर्णया दृष्ट्या पश्यन् अवदत् – ''एतत् भवन्तं कः अवदत् ? प्रायः मत्तः वज्राङ्गुलीयकं प्राप्तवता पुरुषेण एतत् उक्तं स्यात् खलु ? 'कोऽपि न वक्तव्यः' इति मया सूचितः आसीत् सः । करुणया तादृशः वरः तस्मै दत्तः आसीत् मया इति तु सत्यम्'' इति ।

''तादृशी करुणा मयि अपि प्रदर्श्यताम्'' इति विनयेन प्रार्थितवान् विपुलः ।

तदा तान्त्रिकः हसन् अवदत् – ''भोः, करुणा प्रार्थनया न प्राप्यते । केषुचित् केषाञ्चित् करुणा भवति, पुनः केषुचित् न । भवति करुणा दर्शनीया इत्यत्र नास्ति किमपि कारणम्'' इति ।

''मयि करुणा प्रदर्श्यते चेत् भवतः तु कापि हानिः न भवति खलु ? पुनः किमर्थं सा न प्रदर्श्यते मयि ?'' इति पृष्टवान् विपुलः ।

''हानिः न मम, अपि तु भवतः भवेत् । अतः करुणा न प्रदर्श्यते मया । मम यज्ञकार्ये विलम्बं न जनयतु । इतः गच्छतु भवान्'' इति गम्भीरस्वरेण उक्तवान् तान्त्रिकः ।

''यावत् भवान् मह्यं वरं न दास्यति तावत् यज्ञानुष्ठानाय गन्तुं भवन्तं न त्यजामि अहम् । भवतः व्यवस्थायां कमपि विघ्नं कुर्वन् एव भवामि । तावता एषा रात्रिः अतीता भवेत्'' इति भीतिजनकं वाक्यम् उक्तवान् विपुलः ।

''एवम् !'' इति साश्चर्यम् उक्तवान् तान्त्रिकः ।

तदा पार्श्वे स्थितः चन्द्रकान्तः विपुलम् अवदत् – ''मित्र ! तान्त्रिकं मा पीडयतु । शापम् अपि दद्यात् सः । तेन भवतः हानिः भवेत्'' इति ।

''भवान् तूष्णीं तिष्ठतु । हस्तगतं सुवर्णावकाशं त्यक्तुं न इच्छामि अहम्'' इति अवदत् विपुलः ।

चन्द्रकान्तः हताशः सन् द्वित्राणि पदानि पृष्ठतः स्थापयित्वा किङ्कर्तव्यतामूढः सन् कुटीरस्य पुरतः अतिष्ठत् ।

ततः अनतिदूरे एव तान्त्रिकः मन्त्रं वदन् होमाग्निं प्राज्वालयत् । विपुलः तस्य पार्श्वे एव आसीत् । किञ्चित्कालानन्तरं तान्त्रिकः किञ्चित् यज्ञभस्म विपुलस्य हस्ते अस्थापयत् । विपुलेन कीदृशाः वराः प्रार्थिताः इति चन्द्रकान्तेन न ज्ञातम् । यतः सः दूरे आसीत् । किन्तु भस्मदानसमये तान्त्रिकस्य मुखे अवज्ञापूर्वकः हासः आसीत् इति तु तेन लक्षितम् ।

''भवतः इष्टस्य पूर्त्यर्थं वरः दत्तः मया । भवदिच्छा न खण्डिता, न वा भवान् निन्दितः । यतः मया मम सिद्ध्यर्थं त्वरया करणीयं बहु अस्ति । इदानीम् इतः निर्गच्छतु भवान् । अहं शान्त्या मम कर्म करिष्यामि'' इति अवदत् तान्त्रिकः ।

विपुलः तान्त्रिकं विनयेन नमस्कृत्य सन्तोषेण नृत्यन् इव ततः प्रस्थितः । उभौ अपि गृहं प्रत्यागतौ ।

प्रातःकाले नद्यां स्नात्वा तौ ग्रामस्य चतुष्पथे स्थितौ आस्ताम् । केचन ग्रामीणाः स्वकार्यस्य निमित्तं तत्र आगताः आसन् ।

विपुलः तान् गर्वेण पश्यन् अवदत् - ''इतः परं भवन्तः सर्वे मत्पादसेवकाः भविष्यन्ति । अहम् एतस्य देशस्य राजा भविष्यामि'' इति ।

''किम् एतत् एव वरत्वेन प्रार्थितं भवता ?'' इति पृष्टवान् चन्द्रकान्तः ।

''एषः मया प्रार्थितेषु त्रिषु प्रथमः वरः'' इति अवदत् विपुलः ।

''भवता प्रार्थितौ अन्यौ वरौ कौ ?'' इति पृष्टवान् कश्चन ग्रामीणः ।

''मम कोऽपि रोगः न भवेत् इति, मम जीवने वार्धक्यम् एव न भवेत् इति च प्रार्थितं मया'' इति अवदत् विपुलः ।

''किं भवता चिरञ्जीविता न प्रार्थिता ?'' इति पृष्टम् अपरेण ।

''अये मूर्ख ! जीवने वार्धक्यं न भवेत् इत्यस्य अर्थः चिरयौवनं स्यात् इत्येव खलु ?'' इति गर्वेण उक्तवान् विपुलः ।

तावता विपुलस्य हृदये महती वेदना उत्पन्ना । तस्य मुखं कान्तिहीनं जातम् । तस्य अन्तिमक्षणः सन्निहितः आसीत् ।

''अहो, मूर्खता मम ! वार्धक्यं न भवेत् इति प्रार्थितं मया । मरणं प्राप्तं चेदपि वार्धक्यं न भवेत् इत्यतः मद्वाक्यात् ममैव मरणं सम्भवेत् इति न ऊहितम् आसीत् मया'' इति वदन् सः भूमौ अपतत् । अनन्तरक्षणे एव तस्य शरीरात् प्राणपक्षी उड्डीय गतः ।



# अष्टादशसम्बद्धा समस्या

सूर्योदयकालः सः हालिवुड्नगरे । १९८५ तमस्य वर्षस्य जुलैमासस्य त्रिंशत्तमः दिनाङ्कः सः । निर्जने मार्गे किञ्चन यानं गच्छत् आसीत् । तदा उभौ लुण्ठाकौ गुल्मानां पृष्ठभागतः आगत्य हठात् आक्रमणं कृतवन्तौ । तयोः अन्यतरः उन्नतः कृशकायः उद्वेगस्वभावश्च । अपरः वामनः दृढचित्तः शान्तः च । तौ भुशुण्डिकां प्रदर्श्य यानस्थौ भाययित्वा सर्वं लुण्ठयित्वा समीपस्थे वृक्षे बद्ध्वा पलायितवन्तौ ।

एवं लुण्ठितवन्तौ कौ ? कुत्र वसतः तौ ?

ताभ्यां यानस्थाः रजतनाणकोपेताः षट् स्यूताः, डालर्पत्रैः युक्ता एका पेटिका च अपहृता आसीत् । एतावत् लुण्ठयित्वा समीपे स्थापितं कारयानम् आरुह्य कुज्झटिकावृते मार्गे अदृश्यतां गतौ आस्तां तौ ।



एतत् लुण्ठनं प्रवृत्तम् आसीत् दिने एव । यस्य लुण्ठनं जातं तत् यानम् आसीत् हालिवुड्स्टेट्ब्याङ्क् इत्यस्य । मार्गे गच्छन्तः अन्ये वृक्षे बद्धयोः तयोः विमोचनं कृतवन्तः आसन् । तौ तु आघातग्रस्तौ निर्वचनौ च आस्ताम् । ताभ्यां किमपि कर्तुं शक्यं न आसीत् । लाक्हीड्संस्थायाः वेतनवितरणाय धनं नयन्तौ आस्तां तौ । किन्तु धनप्रापणात् पूर्वम् एव, तन्नाम मध्येमार्गम् एव लुण्ठनं प्रवृत्तम् आसीत् ।

लुण्ठाकाभ्यां कृतः अपराधः न सामान्यः । अतः अपराधिशोधविभागेन आरक्षकविभागेन च शीघ्रम् एव कार्यम् आरब्धम् । धनस्य रक्षणाय गतौ उभौ वित्तकोषीयौ तैः बहुधा पृष्टौ । तदा तयोः अन्यतरः एकम् अंशं सूचितवान् । सः अवदत् यत् लुण्ठाकयोः अन्यतरस्य युतके मया लाक्हीड्संस्थायाः चिह्नं दृष्टम् इति । एतस्मात् ज्ञातं यत् लुण्ठाकौ, तयोः अन्यतमः वा लाक्हीड्संस्थायां कार्यं कृतवान् स्यात् इति ।

एकस्मिन् दिने आरक्षकैः अनुपयोगित्वेन परित्यक्तम् एकं कार्यानं प्राप्तम् । यानस्य अन्तः छिन्नीकृताः पत्रखण्डाः प्राप्ताः ।

जागरूकतया तेषां योजनतः कश्चन सङ्केतः प्राप्तः । तम् अनुसृत्य गताः आरक्षकाः एकं गृहं प्राप्य द्वारशब्दं कृतवन्तः । काचित् भद्रमहिला द्वारम् उद्घाटितवती । स्वगृहस्य पुरतः स्थितान् आरक्षकान् दृष्ट्वा सा नितराम् आश्चर्य-चकिता ।



"वयं भवत्याः गृहस्य परिशोधनाय आगताः" इति अवदत् आरक्षकप्रमुखः ।

"स्वागतं भवताम् । कामं परिशोधनं कर्तुम् अर्हन्ति भवन्तः" इति उक्तवती मध्यवयस्का सा महिला । तस्याः नाम आसीत् श्रीमती अबेलाई इति ।

गृहस्य परिशोधनसमये परिशोधकाः पृष्ठतः स्थितम् उद्यानं लक्षितवन्तः, यत्र च गृहस्वामिन्याः पुत्राः कन्दुकेन क्रीडन्तः आसन् । क्रीडनसमये कन्दुकं गृहात् अनति-दूरे स्थितं तात्कालिकभवनं प्रति अगच्छत् । बालाः कन्दुकम् अनुसरन्तः तत् भवनं प्रति धावितवन्तः । तत् कीलितम् आसीत् ।

"एतस्मिन् लघुभवने किम् अस्ति ?" इति पृष्टवान् आरक्षकाधिकारी ।

"एतस्मिन् गृहे आ द्वित्रेभ्यः मासेभ्यः द्वौ तरुणौ भाटकरूपेण वसतः । किन्तु केभ्यश्चित् दिनेभ्यः तौ अत्र न दृष्टौ मया" इति अवदत् गृहस्वामिनी ।

कुतूहलं प्राप्तवन्तः आरक्षकाः तस्य द्वारं भञ्जयित्वा अन्तः गतवन्तः । स्वस्य कन्दुकं प्रतिप्राप्तम् इत्यतः ते बालाः सन्तुष्टाः सन्तः ततः प्रतिगतवन्तः । परिशोधननिरतैः आरक्षकैः अपि सन्तोषः प्राप्तः । यतः तैः लाक्हीड्संस्थायाः चिह्नेन युक्तेन पदकेन सहितं युतकं तत्र प्राप्तम् । स्वयंचलनसमर्था भुषुण्डिका, वित्तकोषीयानां यानरक्षकाणां भुषुण्डिका इत्यादयः अपि तत्र प्राप्ताः ।

आरक्षकाः तत् चिह्नाङ्कितं पदकं स्वीकृत्य लाकहीड्संस्थां प्रति गतवन्तः । लाकहीड्-संस्थीयैः लक्षितं यत् पदकस्य संख्या मिथ्यासृष्टा इति । सा संख्या तदुद्योगिषु कस्यापि न आसीत् । लुण्ठाकौ अतिनैपुण्येन पदकस्थां मूलसंख्याम् अपनीय अपरां संख्यां लिखितवन्तौ आस्ताम् । किन्तु वैज्ञानिकैः प्रयोगालये विशिष्टानां किरणानां साहाय्येन पदकस्था मूलसंख्या अभिज्ञाता एव ।

ततः आरक्षकैः लाक्हीड्संस्थायाः प्राचीनपुस्तकानां साहाय्येन पदकस्था संख्या कस्मै दत्ता आसीत् इति परिशीलितम् । तस्मात् ज्ञातं यत् सा संख्या उन्नताय,



कारागारे स्थापितौ । तौ उक्तवन्तौ यत् आवां निरपराधौ, एतद्विषये न जानीवः इति ।

कठोरविचारणात् अनन्तरं तौ आदौ उक्तवन्तौ यत् धनविषये किमपि न जानीवः इति । तथापि अन्ते अपराधम् अङ्गीकुर्वन्तौ तौ अवदतां यत् प्राणत्यागे समुपस्थिते अपि धनं कुत्र स्थापितम् इति न वदावः इति ।

एकस्यां रात्रौ आरक्षकाः जानसनस्य शाय्यायाः अधः एकं लघु जलपात्रं प्राप्तवन्तौ । तत्र जले एकं प्राचीनं डालर्पत्रं स्थापितं दृष्टम् । 'किमर्थम् एवं जले डालर-पत्रं स्थापितम् ? किम् एतत् धनस्थापन-सम्बन्धि रहस्यं किमपि ज्ञापयेत् ? प्रायः धनं तादृशे जलांशयुक्ते जीर्णस्थले स्थापितं स्यात् । तत्रत्यं धनं कदा नाशदशां प्राप्नुयात् इति परीक्षणाय एषः प्रयोगः क्रियमाणः स्यात्' इति चिन्तितम् आरक्षकैः ।

कृशाय, उद्वेगस्वभावाय जान्सन्नामकाय दत्ता आसीत् इति । लुण्ठनसमये यौ रक्षणकार्ये आस्तां तयोः वर्णनम् अवलम्ब्य अभिज्ञातं यत् जान्सनेन सह स्थितः ह्यारिः इति । सः जानसनस्य मित्रम्, तस्याम् एव संस्थायाम् उद्योगी आसीत् च । सः अपराधप्रवृत्तिमान् अपि आसीत् । एवं महता प्रयासेन लुण्ठनकर्तारौ कौ इति अभिज्ञातम् । किन्तु उभौ अपि आ बहोः कालात् पूर्वम् एव संस्थायाः उद्योगं परित्यक्तवन्तौ आस्ताम् ।

अथ कदाचित् लघुनि वसतिगृहे स्थितः जानसनः अधिगृहीतः आरक्षकैः । अनतिदूरे स्थिते वसतिगृहे वसन् ह्यारिः अपि तस्मिन् एव सायङ्काले गृहीतः । उभौ अपि

एतदनन्तरं तौ अपराधिनौ पार्थक्येन स्थापितौ । तौ रक्षकभटानां द्वारा परस्परम् अभिप्रायविनिमयं कुरुतः स्म । अपराधिशोधविभागीयाः तेषाम् एतान् सन्देशान् रहसि सङ्गृहीतवन्तः ।

तेषु सन्देशेषु '१८' इत्येषा संख्या, 'कागदम्' इत्येषः शब्दः च पौनःपुन्येन उपयुक्तौ दृष्टौ । एकः सन्देशः आसीत् - 'आवां दीर्घकालं कारागारे स्थापितौ स्याव चेत् शैत्यकालस्य वृष्टिः कागदानि

नाशयेत्' इति । अपरः सन्देशः आसीत् - 'मम भगिनी तानि सङ्ग्रहीतुम् अर्हति । किन्तु कथं सा तदौन्नत्यम् आरोढुं शक्नुयात् ?' इति ।

किम् अत्र 'कागदम्' इत्येतत् धनं सङ्केतयति ? यद्येतत् सत्यं तर्हि स्पष्टं यत् काचित् तरुणी यत् स्थलं कष्टेन प्राप्तुं शक्नुयात् तादृशे प्राचीने स्थले तत् धनं भवेत् इति । '१८' इत्येषा संख्या कम् अर्थं बोधयति ? किं सा कमपि मार्गं सङ्केतयेत् ?

आरक्षकाः अपराधिसंशोधकाः च तादृशस्य मार्गस्य अन्वेषणम् आरब्धवन्तः, यस्य च सूचनं '१८' इत्येतया संख्यया युक्तया शिलया कृतं स्यात् । बहुधा प्रयासेन ते एकं लघुं मार्गं प्राप्तवन्तः । तेन मार्गेण गमनात् तैः एकं प्राचीनं श्मशानं प्राप्तं, यच्च दशपादोन्नतया वृत्या आवृतम् आसीत् ।

सर्वं परिशील्य कश्चन अधिकारी अवदत् - ''अत्रत्या स्मारकशिला तैः अभिज्ञापकत्वेन उपयुक्ता स्यात्'' इति ।

''श्मशानस्य वृतिः दशपादमिता अस्ति । तां तरुणी काचित् अतिक्रान्तुं न अर्हति'' इति अवदत् अपरः ।

समस्यायाः परिहारः प्राप्तः इव । आरक्षकाधिकारिणः समयं व्यर्थम् अकुर्वन्तः श्मशानस्थाः सर्वाः स्मारकशिलाः परीक्षितवन्तः । तेषां दृष्टिः एकस्याः स्मारकशिलायाः उपरि पतिता । सा आसीत् कस्यचित् सैनिकस्य । सः १८९८ तमे वर्षे मृतः आसीत् । तस्याः स्मारकशिलायाः मूले मृत्तिका शिथिला दृश्यते स्म । पर्णादीनि अपि सद्यःस्थापितानि दृश्यन्ते स्म ।

तत्र ते खननम् आरब्धवन्तः । किञ्चिदधः यदा खननं कृतं तदा तैः तत्र रजतनाणकोपेताः षट् स्यूताः प्राप्ताः । डालर्पत्रैः पूर्णा पेटिका अपि तैः प्राप्ता ।

कारागारस्थौ उद्दिश्य एषा वार्ता उक्ता । आदौ तौ तत्र विश्वासं न कृतवन्तौ । किन्तु अतिरस्कारार्हम् आसीत् खलु सर्वम् अपि ? अतः तौ अन्ते स्वस्य अपराधम् अङ्गीकृतवन्तौ अनन्यगतिकतया ।



# गुजरातराज्यीया जानपदकथा

# नर्मसचिवस्य समस्या



पूर्वं विनयराजः नाम राजा आसीत् । चतुरङ्गे महती आसक्तिः तस्य । राज्ञा सह को वा क्रीडितुम् अर्हेत् ? राज्ञा सह अधिकमैत्री तु आसीत् नर्मसचिवस्य माधवस्य । अतः सः एकः एव राज्ञा सह चतुरङ्गं क्रीडितुं समर्थः आसीत् । तौ उभौ अपि दिनस्य अधिकं कालं चतुरङ्गपीठस्य पुरतः उपविश्य यापयतः स्म । चतुरङ्गक्रीडायां पणत्वेन किं वा भवितुम् अर्हति ? राज्ञा तु अमूल्यानि वस्तूनि एव पणत्वेन निक्षीयन्ते स्म । यदि पराजयः स्यात् तर्हि अपि राजा अधिकं न चिन्तयति स्म । यतः तानि प्रियस्य नर्मसचिवस्य माधवस्य एव खलु अधीनानि भवन्ति ? माधवः तु सामान्यानि एव वस्तूनि पणीकरोति स्म । जयः प्राप्तः चेदपि तेषां वस्तूनां स्वीकारे राज्ञः इच्छा तु न आसीत् । किन्तु माधवेन सह क्रीडनात् क्रीडायाः नूतनानि चलनानि ज्ञातानि भवन्ति स्म राज्ञा । क्रीडासमये उभौ अपि आत्मनः राजत्वं नर्मसचिवत्वं वा विस्मरतः स्म । उभौ अपि क्रीडावसरे समत्वम् अनुभवतः स्म ।

एकदा क्रीडासमये नर्मसचिवस्य भगिनी तं प्रकोष्ठं प्रविष्टवती । तस्याः नाम मोहिनी इति । सा भ्रातुः मेलनाय तत्र आगतवती आसीत् । तस्याः सौन्दर्यं दृष्ट्वा राजा आश्चर्येण स्तब्धः । अनन्तरदिने क्रीडासमये राजा एकां विलक्षणाम् अपेक्षां सूचितवान् - ''भवता स्वस्य भगिनी पणत्वेन स्थापनीया । यदि अहं जयं प्राप्स्यामि तर्हि मोहिनीं परिणेष्यामि, तां राज्ञीषु अन्यतमां करिष्यामि'' इति ।

''अहं मम राजधानीनगरम् एव पणीकरिष्यामि । यदि भवान् जेष्यति तर्हि एतत् नगरं भवदधीनं भविष्यति'' इत्यपि अवदत् राजा ।

तदा माधवः अवदत् - ''प्रभो ! पणः सदापि समः भवेत् । कस्यचित् नगरस्य

अधीनीकरणे मम आसक्तिः नास्ति । अतः मम निवेदनं यत् भवान् स्वस्य भगिनीं पणीकरोतु इति'' इति ।

राजा विनयराजः क्षणकालं चिन्तितवान् । नर्मसचिवस्य भगिनी परिणेतव्या एव इति राज्ञः मनसि प्रबला इच्छा उत्पन्ना आसीत् । अतः सः अवदत् – ''भवतु, भवतः सूचना अङ्गीक्रियते मया'' इति ।

ततः क्रीडा आरब्धा । उभौ अपि अवधानपूर्वकं क्रीडनम् आरब्धवन्तौ । नर्मसचिवेन बोधिताः सर्वे उपायाः पौनःपुन्येन स्मरन् बहुधा विचिन्त्य राजा स्वस्य अक्षादीन् चालयति स्म । क्रीडायाम् अल्पा प्रगतिः यदा साधिता तदा राज्ञः मनसा कल्पनालोके विहारः आरब्धः । मोहिनी पत्नी जाता इव, तया सह विहारः क्रियमाणः इव तेन स्वप्नः दृष्टः । एवम् अन्यमनस्कता आसीत् इत्यतः राज्ञा अविदिततया पराजयः प्राप्तः । नर्मसचिवः माधवः एव जयं प्राप्नोत् ।

यदि माधवः पराजितः अभविष्यत् तर्हि तदीया भगिनी राज्ञी अभविष्यत् । तथापि 'मया पराजयः तु न प्राप्तः' इति महान् आनन्दः माधवस्य । सः राजानम् अवदत् – ''प्रभो, मया जयः प्राप्तः । पूर्वनिश्चितस्य नियमस्य अनुगुणं भवतः भगिनी इदानीं मदधीना । तां मया सह प्रेषयतु । अहं तां परिणेष्यामि'' इति ।

तदा राजा महता आश्चर्येण अवदत् – ''किम् उक्तं भवता ? किं मम भगिनी परिणेतुम् इष्यते भवता ? भोः, मम एका एव भगिनी । सा एतावता एव परिणीता अस्ति अन्येन । अतः अन्यत् यत्किमपि याचतु । अहं पूर्णेन मनसा दास्यामि'' इति ।

''किन्तु तत् उचितं न भवेत् । अन्यस्मिन् वस्तुनि नास्ति मम इच्छा । भवता सा पणीकृता आसीत् । अतः तस्यां मम अस्ति एव अधिकारः । वचनभङ्गं कर्तुं न अर्हति भवान्'' इति अवदत् माधवः ।

इदानीं राज्ञा अवगतं – भगिनीं पणीकुर्वता मया अनुचितं कृतम् इति । वचनं तु दत्तम् आसीत् एव । इदानीं तदनुगुणात् व्यवहारात् ऋते नास्ति अन्या गतिः । अतः सः अवदत् – ''भवतु नाम । श्वः मम भगिनी मातरं द्रष्टुम् अत्र आगमिष्यति । सा स्वेच्छया भवन्तं न अनुसरेत् कदाचिदपि । कथमपि तस्याः नयनाय अहम् अवकाशं कल्पयिष्यामि । नयनानन्तरं विरोधं न करिष्यामि च । शिष्टं सर्वं भवता एव चिन्तनीयम्'' इति ।

भगिन्याः वनितायाः आगमनस्य अनन्तरदिने राजा सानुरोधं ताम् उक्तवान् यत् नदीतीरे विहारार्थं गच्छाव इति । मध्येमार्गं विकसितैः





कुमुदैः युक्तः कश्चन सरोवरः दृष्टः । कौमुदी-युक्तः समयः आसीत् सः । ''अहो, रमणीयं दृश्यम् !'' इति अवदत् राजा ।

तदा तदीया भगिनी वनिता अवदत् - ''अहं भवदर्थं कानिचन कुमुदानि आनेष्यामि'' इति । सा कुमुदानि आनेतुं सरोवरतीरं गतवती । तत्र दूरस्थं कुमुदम् अवचेतुं हस्तं प्रसारितवती सा सरोवरे पतिता । नर्मसचिवेन माधवेन सह वार्तालापावसरे जातस्य पूर्वनिश्चयस्य अनुगुणं राजा ततः अदृश्यः अभवत् ।

राजपुत्री वनिता परितः दृष्टिं प्रसारितवती । तया भ्राता कुत्रापि न दृष्टः । 'मां सरोवरे पतिताम् अज्ञात्वा सः सञ्चारम् अनुवर्तयन् अग्रे गतवान् स्यात्' इति चिन्तयित्वा सा उच्चैः अवदत् - ''भ्रातः ! कुत्र गतः भवान् ? साहाय्यं क्रियताम् । अहं सरोवरे पतिता अस्मि । साहाय्यं क्रियताम्'' इति ।

माधवः एतादृशस्य आह्वानस्य एव प्रतीक्षायाम् आसीत् । सः झटिति अश्वात् अवतीर्य सरोवरतीरं प्राप्य साहाय्यहस्तं प्रसारितवान् । राजपुत्री तस्य हस्तं गृहीत्वा सरोवरात् बहिः आगतवती । ''भद्रे ! भवत्या मम हस्तः गृहीतः । अहम् एतं हस्तं परित्यक्तुं न इच्छामि । भवत्या मया सह गन्तव्यम्, अहं परिणेतव्यः च । पत्नीत्वेन मम गृहे वासः करणीयः भवत्या'' इति अवदत् माधवः ।

तदा भीत्या अवदत् वनिता - ''अहं राजपुत्री वनिता अस्मि । भवता अहं रक्षिता यत् तदर्थं कृतज्ञा अस्मि श्रीमन् ! अहं विवाहिता अस्मि एतावता एव'' इति ।

''तत्सर्वम् अनन्तरं चर्चयिष्यामः । अत्र भवतीम् एकाकिनीम् परित्यक्तुं नार्हामि अहम् । अतः भवती मया सह मम गृहम् आगच्छतु । आगच्छतु, मम अश्वम् आरोहतु तावत्'' इति अवदत् माधवः ।

अन्यां गतिम् अपश्यन्ती वनिता तस्य अश्वम् आरूढवती । यदा अश्वात् अवतीर्णा तदा तया नगरसीमायां स्थितं रक्षकभटैः परिवृतम् एकं विशालं भवनं दृष्टम् । तया भवनं प्रविष्टम् । तत्र रक्षकभटेभ्यः ऋते अन्यः कोऽपि न आसीत् । तत्र माधवः चतुरङ्गक्रीडावृत्तान्तं, तस्याः पणीकरणं,

स्वस्य जयं च ताम् उक्तवान् । 'मम भ्राता मम अनुज्ञां विना मां पणीकृतवान् यत् तत् तु दोषाय । तथापि सः एतस्य देशस्य राजा अस्ति । राज्ञः मानस्य रक्षणं मम धर्मः' इति विचिन्त्य वनिता माधवम् अवदत् - ''चतुरङ्ग-क्रीडायाः पणनियमस्य अनुगुणम् अहं भवदधीना जाता अस्मि । अस्तु तावत् । एतत् अङ्गीक्रियते मया । अहम् अत्र स्थास्यामि । किन्तु आवयोः विवाहः अग्रिमे पूर्णिमादिने एव भवितुम् अर्हति, न तु ततः पूर्वम्'' इति ।

'तस्मात् भवनात् पलायनार्थं मार्गः चिन्त्यमानः अस्ति' इत्येतस्य किमपि लक्षणं माधवेन यथा न ज्ञायेत तथा जागरूकताम् ऊढवती वनिता । पूर्णिमातः द्वित्रेभ्यः दिनेभ्यः पूर्वं सा ततः पलायनार्थम् अवसरं प्राप्तवती । ततः निर्गता सा राजभवनं प्रति गमनस्य विचारं परित्यज्य साक्षात् पतिगृहं प्रति गतवती । तस्याः पतिः पणादिविचारं, तस्याः राजभवनात् अन्यत्र वासं वा न जानाति स्म ।

राजपुत्री पलायनं कृतवती इति यदा ज्ञातं तदा माधवः साक्षात् राजभवनं प्रति गतवान्, राजानं प्रवृत्तं सर्वं निवेदितवान् च ।

राजा विनयराजः अवदत् - ''सा पतिगृहं गतवती स्यात् । भवद्गृहं प्रति तस्याः प्रेषणं मया तु न शक्यते । सा कुत्र अस्ति इति भवान् एव ज्ञातुं प्रयासं करोतु । मया सह आगच्छतु इति सानुरोधं वदतु च'' इति ।

माधवः ततः प्रस्थाय वनितायाः पत्युः गृहं प्रति गतवान् । वनितायाः पतिः राज्ञः विषये कुपितः - 'चतुरङ्गक्रीडायाः निमित्तम् एषः मम पत्नीं पणीकृतवान्' इति । माधवस्य विषये अपि सः कुपितः - 'विवाहिताम् अपि मम पत्नीं परिणयविषयं सानुरोधम् उक्तवान्' इति । सः माधवम् अवदत् - ''भवता मम पत्नी चतुरङ्गक्रीडायां जिता स्यात् । तथापि मया सह युद्धं कृत्वा अहं पराजितः चेदेव सा नेतुं शक्या भवता'' इति । नर्मसचिवः एतत् अङ्गीकृतवान् । यतः सः युद्धविद्यायाम् अपि निपुणः आसीत् एव ।

अनन्तरदिने तयोः युद्धम् आरब्धम् । वनितायाः पतिः प्राणान् पणीकृत्य युद्धं कर्तुम् उद्युक्तः आसीत् । अतः तयोः





प्राणत्यागानन्तरं तु तस्यां स्थितः आदरभावः इतोऽपि प्रवृद्धः । सा स्वस्य पातिव्रत्यधर्मं लोपं विना पालितवती आसीत् ।

मत्कारणतः वनितायाः पत्या मरणं प्राप्तव्यम् अभवत् इति माधवः अपि खिन्नः । मां जित्वा राजपुत्रीं नेतुम् अर्हति इति वदन् जयाय अवकाशं दत्तवतः तस्य विषये माधवस्य कृतज्ञताभावः उत्पन्नः । 'सः मरणं प्राप्तवान् यत् तत् तु दौर्भाग्यस्य विषयः' इति अचिन्तयत् माधवः ।

माधवः अपि खेदेन देशसञ्चारम् आरब्धवान् । एवं सञ्चारसमये सः कञ्चित् विरागिणम् अपश्यत् । वार्तालापात् तेन ज्ञातं यत् एषः विरागी महिमवान् अस्ति इति । सः तेन सह दीर्घं वार्तालापम् अकरोत् । वार्तालापसमये विरागी अवदत् यत् मृतान् उज्जीवयितुम् अपि कश्चन मार्गः अस्ति इति । एतस्मात् माधवस्य आशा पल्लविता । 'राजपुत्रीं तस्याः पतिं च उज्जीवयितुं मया किमपि करणीयम्' इति सः सङ्कल्पितवान् । सः विरागिणं मृतसञ्जीविनीविद्यारहस्यम् अपृच्छत् । तदा विरागी अवदत् – ''इतः सुदूरे कश्चन पर्वतः अस्ति । तस्य उपत्यकायां कश्चन ग्रामः अस्ति । तत्रत्याः मृतसञ्जीविनीविद्यां जानन्ति । भवता तेषां सेवा करणीया । ते सन्तोषणीयाः । तदा तेषां मुखात् मृतानाम् उज्जीवनाय मन्त्रः कोऽपि प्राप्येत'' इति ।

दीर्घप्रयाणं कृत्वा विरागिणा उक्तं पर्वतं प्राप्तवान् माधवः । कश्चन ग्रामः अपि तेन प्राप्तः । तस्मिन् ग्रामे जनाः पक्षिणः मारयित्वा खादन्ति स्म । ततः तेषां पक्षिणः

युद्धं दीर्घकालं यावत् प्रवृत्तम् । अन्ते वनितायाः पत्युः खड्गः द्विधा भग्नः । तस्य एकः खण्डः तदीये हृदये लग्नः । तस्मात् सः तत्रैव मरणं प्राप्तवान् ।

'पत्युः मरणं जातम् इत्यतः इदानीं परिणये न कोऽपि विघ्नः' इति यद्यपि माधवः वक्तुम् ऐच्छत् तथापि किमपि न अवदत् । यतः वनिता पतिवियोगदुःखसागरे निमग्ना आसीत् । पत्युः अन्त्यसंस्कारः समाप्तः भवतु इति सः चिन्तितवान् । अन्त्यसंस्कारसमये पत्न्या पत्युः चिता सप्तवारं प्रदक्षिणीकरणीया । वनिता तथैव कृतवती । अन्ते पातिव्रत्यधर्मम् आचरन्ती सा स्वयम् अपि चितां प्रविष्टवती । ज्वलन् अग्निः स्वस्य ज्वालाभिः तस्याः देहम् अदहत् ।

एतस्मात् राजा मतिभ्रष्टः इव जातः । सः निरुद्देशतया देशे भ्रमणम् आरब्धवान् । भगिनीं वनितां सः विस्मर्तुं न अशक्नोत् । तस्य महती प्रीतिः आसीत् तस्याम् । तस्याः

पिञ्छादीन् अस्थीनि च एकत्रीकृत्य कमपि मन्त्रं जपन्ति स्म । तस्मात् ते पक्षिणः पुनः उज्जीविताः सन्तः उड्डीय गच्छन्ति स्म । तस्मात् माधवः निश्चितवान् यत् विरागिणा सूचितः ग्रामः अयमेव इति ।

विरागिणा यथा सूचितं तथा माधवः तस्मिन् एव ग्रामे वासम् आरब्धवान् । ग्रामीणानां कार्येषु साहाय्यम् आरब्धवान् । गच्छता कालेन ग्रामीणानां विश्वासः तस्मिन् उत्पन्नः । तस्मिन् दिने सः तान् अपृच्छत् – "मृतानाम् उज्जीवनं कथं साध्यते भवद्भिः ?" इति ।

ते तं कस्याश्चित् वृद्धायाः महिलायाः समीपं नीतवन्तः । तस्य सद्गुणान् वर्णयित्वा तदीयाम् अपेक्षाम् अपि तां सूचितवन्तः । तस्मात् सा वृद्धा मन्त्रस्य बोधनम् अङ्गीकृतवती । सा तं स्वस्य कुटीरस्य अन्धकारमयं कश्चित् प्रकोष्ठं प्रति नीतवती । तत्र कञ्चन मन्त्रं बोधयित्वा अनेकवारं तस्य उच्चारणं कारितवती ।

एवं मन्त्रोपदेशं प्राप्तवान् माधवः स्वस्य देशम् आगतवान् । यत्र राजपुत्री मरणं प्राप्तवती तं प्रदेशं प्रति गतवान् सः । तत्रत्यं भस्म राशीकृत्य जलेन तत् अभ्युक्ष्य आत्मना ज्ञातं मृतसञ्जीविनीमन्त्रं त्रिवारम् उच्चारितवान् । यदा तेन नेत्रे उद्घाटिते तदा भस्मराशितः उत्तिष्ठन्ती वनिता तेन दृष्टा ।

सः पार्श्वस्थं भस्मराशिं जलेन सिक्त्वा पुनरपि त्रिवारं मन्त्रम् उच्चारितवान् । एतस्मात् वनितायाः पतिः अपि उज्जीवितः जातः ।

एतस्मात् माधवः नितरां सन्तुष्टः । वनितायाः पतिः माधवम् अवदत् – "आर्य ! भवता जयः प्राप्तः । अतः एतां स्वीकर्तुम् अस्ति भवतः अधिकारः" इति ।

वनिता तु किमपि न उक्तवती । सा मौनेन स्थितवती आसीत् । इदानीं माधवस्य मनसि द्वैधीभावः – मया वनिता स्वीकरणीया, उत न इति ।

तावता विरागी तत्र आगतः । सः माधवस्य समस्याम् अवगत्य अवदत् – "माधव ! भवता सा उज्जीविता । अतः भवान् तस्याः पिता इव । पित्रा यथा आचरणीयं तथा आचरतु" इति ।

इतिकर्तव्यतां निर्णीतवान् माधवः झटिति अग्रे गत्वा वनितायाः हस्तं गृहीत्वा तस्याः पत्युः हस्ते स्थापितवान् । ततः किमपि अवदन् सः ततः निर्गतवान् ।

एतदनन्तरं सः तस्मिन् देशे केनापि न दृष्टः एव ।



# वाचकानां कृते कथास्पर्धा

## चिता पूर्तिः रू. २५० अर्हति पारितोषिकत्वेन



**अधस्तनकथा पठ्यताम् –**

रामतीर्थः रायदुर्गस्य महाधनिकः । तस्य गृहे बहवः सेवकाः आसन् । तेषु अन्यतमः नारायणः । तस्य कार्यम् आसीत् - सर्वे प्रकोष्ठाः स्वच्छीकरणीयाः, सर्वाणि वस्तूनि स्वस्थाने स्थापनीयानि च इति ।

कदाचित् सः एकं नाणकम् आनीय स्वामिने दत्तवान् । तदा रामतीर्थः - "भवतः निष्कपटव्यवहारतः अहं सन्तुष्टः अस्मि । एतत् नाणकं पारितोषिकरूपेण भवान् एव स्वसमीपे स्थापयतु" इति अवदत् ।

ततः केषाञ्चित् दिनानाम् अनन्तरं गृहे वज्रहारः कश्चन अदृश्यतां गतः । रामतीर्थः सर्वान् सेवकान् एतं विषयम् अपृच्छत् । ते उक्तवन्तः तत् नास्माभिः स्वीकृतं, न वा दृष्टम् इति । अन्ते रामतीर्थः नारायणं पृष्टवान् ।

**नारायणः कीदृशम् उत्तरं दत्तवान् स्यादिति भवन्तः चिन्तयन्ति ?**

- नारायणः वज्रहारं दृष्टवान्, न दृष्टवान् वा स्यात् ।
- यदि सः दृष्टवान् स्यात् तर्हि किम् उत्तरं स्यात् तस्य ?
- नारायणस्य उत्तरं श्रुतवतः रामतीर्थस्य प्रतिस्पन्दः कीदृशः स्यात् ?
- सेवकाय पारितोषिकं यच्छता रामतीर्थेन किं युक्तः व्यवहारः कृतः ?

स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा 'पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -

**अन्तिमः दिनाङ्कः २९, फेब्रवरी, २००४**

नाम ------------------------------ वयः -------- जन्मदिनाङ्कः ---------

विद्यालयः ---------------------------------------- कक्ष्या ---------

गृहसङ्केतः ----------------------------------------------------------

---------------------------------------------------------------------

------------------------------ Pincode ----------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# सफला यात्रा

ब्रह्मदत्तः यदा काशीं परिपालयन् आसीत् तदा बोधिसत्त्वः कस्मिंश्चित् वणिक्परिवारे जन्म प्राप्तवान् । सः बाल्ये एव वाणिज्यतन्त्राणि कौशलं च ज्येष्ठेभ्यः अधीतवान् । सः एकैकम् अपि विषयं समग्रतया परिशील्य सम्यक् विचिन्त्य निर्णयं करोति स्म । एवं कुर्वन् सः स्वस्य ज्ञानं विवेकं च वर्धितवान् ।

यदा सः ज्येष्ठः जातः तदा आ पूर्वात् आपश्चिमं वाणिज्यार्थं प्रयाणम् आरब्धवान् । पञ्चशताधिकेषु वृषभशकटेषु वस्तूनि आरोप्य नयति स्म सः । वाणिज्येन प्रभूतं धनम् अपि सम्पादयति स्म सः ।

काशीनगरे एव मन्दमतिः नाम अपरः अपि वणिक् वाणिज्यं करोति स्म । सः अन्वर्थनामकः, उपायहीनः च । कदाचित् बोधिसत्त्वः यदा वाणिज्यार्थं प्रयाणम् आरब्धवान् तदा मन्दमतिः तम् अवदत् यत् अहम् अपि वाणिज्यार्थं भवता सह आगमिष्यामि इति ।

तदा बोधिसत्त्वः अवदत् - ''यदि आवयोः उभयोः अपि शकटाः युगपत् प्रयाणं कुर्युः तर्हि मार्गे महान् सम्मर्दः भवेत्, प्रयाणं च दुष्करं स्यात् । अतः आवयोः अन्यतरस्य अग्रे गमनम्, अपरस्य अनुसरणं च वरम् । भवान् अग्रगामी भवितुम् इच्छति उत अनुगामी भवितुम् ? निर्णयः भवदधीनः'' इति ।

मन्दमतिः अचिन्तयत् - 'यदि अहम् अग्रगामी स्यां तर्हि एव अधिकाः लाभाः । मार्गः सुगमः भवति । पानाय स्वच्छं जलं पर्याप्ततया प्राप्यते । स्वादूनि फलानि अपि प्राप्यन्ते । वृषभादीनां चरणाय हरितानि तृणानि अपि लभ्यन्ते । यत्र गच्छामि तत्र अहम् एव मूल्यनिर्णयं कृत्वा विक्रेतुं शक्नोमि । तदा एव अधिकः लाभः स्यात्' इति ।

बोधिसत्त्वः अपि एतद्विषये चिन्तितवान्



आसीत् – 'अग्रगामितः अपि अनुगामिता एव श्रेयसे । यः अग्रगामी भवति तेन जलम् अन्वेष्टव्यम् । जलं न प्राप्तं चेत् कूपाः निर्मातव्याः अपि । तैः सम्पादिताः कूपाः एव अनुगामिना उपयोक्तुं शक्याः । नूतने स्थले मूल्यनिश्चयः अपि क्लेशाय । यत्र मूल्यं निर्णीतं भवति तत्र विक्रयणम् एव सुकरम् । विक्रयणे समस्याः अग्रगामिना सम्मुखीक्रियन्ते, परिहारोपायाः चिन्त्यन्ते च । अनुगामिना ताः समस्याः पुनः सम्मुखीकरणीयाः न भवन्ति । अग्रगामिनः वृषभादयः यत्र तृणानि चरन्ति तत्र हरितानि तृणानि सद्यः उत्पद्यन्ते । तानि अनुगामिनः उपयोगाय भवन्ति । एवम् अनुगामिता एव श्रेयसे' इति ।

अतः 'अहम् एव अग्रे गमिष्यामि' इति मन्दमतिः यदा अवदत् तदा तत् ससन्तोषम् अङ्गीकृतवान् बोधिसत्त्वः ।

आत्मना उक्तः प्रस्तावः बोधिसत्त्वेन अङ्गीकृतः इत्यतः मन्दमतिः अपि सन्तुष्टः । सर्वाणि आनुकूल्यानि ममैव भवन्ति इति चिन्तयन् स्वस्य चातुर्यं स्वयम् एव प्रशंसन् यात्रायै उद्युक्तः जातः सः ।

मन्दमतेः गम्यं स्थलं षष्टिक्रोशदूरे आसीत् । मध्येमार्गम् मरुभूमिः अपि अतिक्रमणीया आसीत् तेन । अतः सः प्रस्थानावसरे एव आहारव्यवस्थां पानजल-व्यवस्थां च यथायोग्यं कृत्वा एव स्वनगरात् प्रस्थितवान् । 'बोधिसत्त्वः मूर्खताम् आचरितवान्' इति चिन्तयति स्म सः ।

मन्दमतेः अनुयायिसमूहः वस्तूनि वहन् मरुभूमिं प्राप्तोत् केषाञ्चित् दिनानां प्रयाणस्य अनन्तरम् । ततः अल्पे एव दूरे तैः एकः अपूर्वः शकटः दृष्टः । शकटे उत्तमजातीयाः दृढकायाः वृषभाः योजिताः आसन् । शकटस्य पुरतः खड्गधारिणः धनुर्धारिणः गदाधारिणः च सैनिकाः स्थिताः आसन् । शकटे कश्चन राजपुरुषः गाम्भीर्येण उपविष्टः आसीत् । शकटस्य चक्रेषु पङ्कः लग्नः दृश्यते स्म । सर्वेषां हस्ते कमल-पुष्पाणि आसन् ।

सः शकटस्थः राजपुरुषः मन्दमतिम् अवदत् – ''अहो, तत्र महती वृष्टिः जाता ! सर्वत्र जलप्रवाहः एव दृश्यते । अरण्यं समग्रं जलमयं जातम् अस्ति । भवन्तः अपि तस्यां दिशि एव गच्छन्ति इति मन्ये । एतेषु पात्रेषु जलं किमर्थं नीयते तत्र ? व्यर्थः भारः किमर्थम् उह्यते ? एतत् जलं क्षिपन्तु । सुखेन

प्रयाणं कुर्वन्तु च'' इति ।

सः राजपुरुषः तेन सह स्थिताः च नरभक्षकाः यक्षाः । ते मरुभूमौ प्रयाणं कुर्वतः जनान् एवम् एव उपदिशन्तः मधुरैः वचनैः वञ्चयन्ति स्म । यदा यात्रिकाः जलाभावकारणतः मरणं प्राप्नुवन्ति तदा तान् खादन्ति स्म ते ।

मन्दमतिः तेषाम् एतत् कुतन्त्रं न जानाति स्म । तेषां वचनेषु विश्वसन् सः जलपात्राणि रिक्तीकारितवान् । प्रयाणम् अनुवर्तितवान् च । सुदूरं प्रयाणं कृतं चेदपि तैः वृष्टिलक्षणं न दृष्टम् । क्षणे क्षणे जलाभावसमस्या वर्धते स्म ।

वणिग्जनाः पिपासया पीड्यमानाः आसन् । पानार्थं जलस्य बिन्दुः अपि न दृश्यते स्म । सर्वेषां कण्ठाः शुष्काः जाताः आसन् । तस्मात् एकैकशः मरणं प्राप्तवन्तः ते । ये जनाः पशवः च मृताः तान् यक्षाः खादितवन्तः । तेषाम् अस्थिपञ्जराणि मरुभूमौ ते क्षिप्तवन्तः ।

ततः चत्वारिंशतः दिनानाम् अनन्तरं बोधिसत्त्वः अपि अनुचरैः सह प्रयाणम् आरब्धवान् । सः अपि मरुभूमियात्रानिमित्तम् आहारपदार्थान् जलं च स्वीकृत्य प्रस्थितवान् आसीत् ।

मरुभूमिः यदा प्राप्ता तदा सः अनुचरान् उक्तवान् - ''मम अनुज्ञां विना जलस्य एकः बिन्दुः अपि न उपयोक्तव्यः, व्यर्थीकरणीयः वा । एतस्यां मरुभूमौ विविधाः विषवृक्षाः भवन्ति । अतः मम अनुज्ञां विना कोऽपि किमपि फलं पर्णं वा न खादेत्'' इति ।

मरुभूमौ यदा किञ्चिद्दूरं गतं तदा शकटे उपविष्टः राजपुरुषः तेषां पुरतः प्रत्यक्षः



जातः ।

मन्दमतिः यथा उक्तः तथैव बोधिसत्त्वः अपि उक्तः तेन ।

तदा बोधिसत्त्वः तान् अवदत् – ''एतत् भवद्भिः वक्तव्यं नास्ति । वयं वणिजः स्मः । यावत् अन्यत्र जलं न प्राप्यते तावत् विद्यमानं जलं न क्षिपामः वयम् । अतः अन्यत्र यदा जलं प्राप्स्यते तदा एतस्य क्षेपणविचारं करिष्यामः'' इति ।

एतत् उत्तरं श्रुत्वा यक्षाः विना प्रतिवचनं पलायितवन्तः ।

बोधिसत्त्वस्य अनुचरेषु केचन यक्षाणां वचने विश्वासं कृतवन्तः आसन् । ते जलक्षेपणं समर्थितवन्तः ।

तदा बोधिसत्त्वः तान् अबोधयत् – ''एतस्मिन् प्रदेशे जलाशयः अस्ति इति किं भवद्भिः कदापि श्रुतम् ? ते वदन्तः आसन् यत् मुलसधारावृष्टिः जाता अस्ति इति । किं भवद्भिः शीतलवायोः अनुभवः प्राप्तः ? आकाशे किं मेघाः दृष्टाः ? मेघगर्जनं किं श्रुतम् ? तडितः किं लक्षिताः ? अस्माभिः ये दृष्टाः ते कपटिनः यक्षाः । पिपासया अस्मान् मारयित्वा खादितुम् इच्छन्ति ते । इतःपूर्वं ये गताः तान् एतावता खादितवन्तः स्युः एते । मध्येमार्गं तेषाम् अस्थिपञ्जराणि अस्माभिः प्राप्येरन्'' इति ।

तैः किञ्चिदग्रे यदा गतं तदा वृषभ-शकटाः, वस्तूनि च दृष्टानि । इतस्ततः पतितानि मनुष्याणां पशूनां च अस्थि-पञ्जराणि अपि तैः दृष्टानि । तत्रत्यं दृश्यं घोरं भयानकं च आसीत् ।

''दृष्टं खलु भवद्भिः – मन्दमतिः कीदृशीं मूर्खताम् आचरितवान् इति ? परकीयानां वचनेषु विश्वस्य तेन जलं क्षिप्तम् । तस्य परिणामतः एतादृशं घोरं मरणं प्राप्तम्'' इति अवदत् बोधिसत्त्वः ।

बोधिसत्त्वस्य जनाः तस्यां रात्रौ तत्रैव वासं कृतवन्तः । पूर्वम् आगतैः आनीतेषु वस्तुषु यानि नष्टानि न आसन् तानि सङ्गृह्य ते नीतवन्तः । ततः ते गम्यस्थानं प्राप्तवन्तः । सम्यक् वाणिज्यं च कृतवन्तः । तस्मात् प्रभूतं लाभं सम्पाद्य स्वदेशं प्रत्यागतवन्तः । एतस्यां यात्रायां तेषु एकस्यापि मानवस्य पशोः वा हानिः न जाता ।





# विष्णुपुराणम्

सत्यव्रतस्य वचनं श्रुत्वा मत्स्यः समुद्रं प्राविशत् । समुद्रे महापर्वतः इव तिष्ठन् समुद्रं सुदूरम् अभिव्याप्नुवन् सः अवदत् - ''सत्यव्रत ! भवतः वाणी अवितथा अस्ति । एवं प्रतिक्षणं वर्धमानः अहं न जाने कां दशां प्राप्नुयाम् इति'' इति ।

सत्यव्रतः करौ योजयित्वा प्रणामं कृत्वा स्तुतिपुरस्सरम् उक्तवान् - ''मत्स्यावतार-रूपिन्, हे नारायण ! आत्मनः रक्षणम् इच्छन् भवान् मत्समीपम् आगतवान् । किन्तु भवतः आगमनस्य उद्देशः तु मम रक्षणम् एव । मत्स्यावतारं प्राप्तवान् भवान् लीला-पुरुषः एव । भवतः लीलानाम् अवगमनाय अपेक्षितं सामर्थ्यं नास्ति मम'' इति ।

एतस्य उत्तररूपेण मत्स्यावताररूपेण स्थितः भगवान् विष्णुः अवदत् - ''हे राजन् ! इतः सप्ताहाभ्यन्तरे कल्पस्य अन्त्यं भविष्यति । प्रलयकाले समग्रः प्रपञ्चः जले निमग्नः भविष्यति । तदवसरे ज्ञानस्य ओषधीनां च विनाशः न भवेत् । तदर्थं काचित् नौका गहने अन्धकारे प्रकाशं प्रसारयन्ती भवत्समीपम् आगमिष्यति । तस्य अन्तः सप्तर्षयः भवन्ति । तेषां कान्तिः एव प्रकाशरूपेण भासिष्यते । भवान् ओषधि-बीजैः सह नौकाम् आरोहतु । अहं मम शिरसः उपरि स्थितयोः शृङ्गयोः मध्ये तां नौकां वहन् मज्जनात् तस्याः रक्षणं करिष्यामि । तदर्थम् एव मया एषः अवतारः प्राप्तः अस्ति । एतस्मिन् काले ब्रह्मा निद्रामग्नः भवति । यावत् सः जागरणं न प्राप्स्यति तावत् नौका ध्रुवनक्षत्रं लक्ष्यीकृत्य प्रयाणं करिष्यति । अग्रिमे कल्पे भवान्



वैवस्वतनाम्ना मनुः भविष्यति'' इति ।

सत्यव्रतः विष्णोः आज्ञां शिरोधार्यां मत्त्वा नतमस्तकः भूत्वा प्रणामं कृतवान् । मत्स्यः स्वस्य चतुरः अपि पक्षान् सशब्दं चालयन् उन्नतान् तरङ्गान् उत्पादयन् समुद्रस्य अन्तः गच्छन् अदृश्यः जातः ।

ब्रह्मा गहननिद्रायां निमग्नः जातः । अन्धकारे प्रलयः विराजते स्म । हयग्रीव-नामकः सोमकासुरः समुद्रतलात् उपरि आगत्य ब्रह्मणः सत्यलोकं प्रविष्टवान् ।

ब्रह्मा निद्राकारणतः जृम्भणं कुर्वन् आसीत् । तस्य मुखात् श्वेत-रक्त-पीत-नील-वर्णैः विराजमानाः वेदाः निर्गत्य अधः पतिताः । हयग्रीवः तान् वेदान् स्वीकृत्य समुद्रस्य अन्तः गोपितवान् ।

हयग्रीवः विष्णोः अन्यदेवतानां च विरोधी आसीत् । वेदैः विना ब्रह्मा सृष्टिकार्यं कर्तुं न शक्नोति स्म । प्रतिकल्पं विष्णुः सद्वृत्तिं वर्धयन् विकासं करोति स्म । तस्य एतस्य सङ्कल्पस्य नाशः एव हयग्रीवस्य उद्देशः आसीत् ।

प्रलयकालीनः समुद्रः पृथिवीं मज्जयन् आसीत् । तस्मिन् समये घोरे अन्धकारे नक्षत्रम् इव प्रकाशमानः कश्चन प्रकाशः दृष्टः । तदन्तः काचित् नौका दृष्टिगोचरतां गता । सा एव सप्तर्षिभिः उपेता नौका ।

सत्यव्रतः ओषधीन् बीजानि च नौकायाम् आरोपितवान् । नारायणस्य स्तुतिं कुर्वन् स्वयम् अपि ताम् आरूढवान् । तां वहतः मत्स्यस्य नासिकाग्रे एकं शृङ्गम् आसीत् । नक्षत्रम् इव प्रकाशमानं तत् शृङ्गम् आलिङ्ग्य कश्चन महासर्पः प्रलयकालीनान् महातरङ्गान् गिलति स्म । मत्स्यः स्वस्य पक्षैः तरङ्गान् अपसारयन् समुद्रस्य मध्ये मार्गं परिकल्प्य नौकां सुरक्षिततया अग्रे नयति स्म । ध्रुवनक्षत्रं मार्गदर्शकं कृत्वा नौका पुष्पम् इव समुद्रे प्लवते स्म ।

समुद्रगर्भे स्थापितान् वेदान् रक्षन् सोमकासुरः समुद्रस्य अन्तः एव सञ्चरन् आसीत् । चत्वारः वेदाः चतुर्णां शिशूनां रूपं धृत्वा किलकिलेति ध्वनिं कुर्वन्ति स्म ।

मत्स्यः वेदानाम् अन्वेषणं कुर्वन् सञ्चारम् अकरोत् । मत्स्यावतारस्य दर्शनात् सोमकासुरः नितरां भीतः । तथापि कथमपि आत्मनि धैर्यं प्रपूर्य सः स्वस्य कण्टकमयीं गदां स्वीकृत्य मत्स्यं प्रहर्तुम् उद्युक्तः जातः ।

तस्मिन् काले विष्णोः कटिपर्यन्तः भागः मत्स्याकारः आसीत् । तस्य चत्वारः हस्ताः



आसन् तदा । मत्स्यावतारिणः विष्णोः सोमकासुरस्य च घोरं युद्धं प्रवृत्तम् ।

सोमकासुरः समुद्रतलं प्राप्य धावनं कर्तुम् उद्युक्तः । तावता विष्णुः स्वस्य चक्रस्य प्रयोगं कृतवान् । तच्च चक्रं सोमकासुरस्य शिरसः छेदनम् अकरोत् ।

विष्णुः शिशुरूपेण स्थितान् वेदान् उन्नीय जलात् बहिः आगतवान् । ते चत्वारः अपि शिशवः विष्णोः कण्ठहारे स्थितेन कौस्तुभेन श्रीवत्सनामकेन वज्रेण च क्रीडन्तः हसन्तः आसन् । ते श्वेत-रक्त-पीत-नील-कान्त्या शोभमानाः आसन् । विष्णोः हस्ते शङ्खः, चक्रं च शोभते स्म ।

विष्णोः मत्स्यावतारं दृष्ट्वा देवर्षयः सत्यव्रतः च हस्तौ उन्नीय स्तोत्रम् आरब्धवन्तः । प्रलयताण्डवं समाप्तम् आसीत् । तत्र तत्र भूमिः दृश्यते स्म । नौका अपि लक्ष्यं प्राप्तवती आसीत् ।

ब्रह्मणः रात्रिः दिनसमा भवति । तदीया निद्रा समाप्तप्राया आसीत् । आकाशे प्रकाशकिरणाः उदिताः दृश्यन्ते स्म । नूतनः कल्पः आरब्धः आसीत् । सरस्वती आदौ जागरणं प्राप्तवती । सा वीणां स्वीकृत्य भूपालरागस्य आलापनम् आरब्धवती । ब्रह्मा जागरितः जातः । स्वस्य चतुर्षु अपि शिरस्सु काम्पि अशान्तिम् अनुभूतवान् सः । परीक्षणात् ज्ञातं यत् वेदाः न दृश्यन्ते इति । एतस्मात् खिन्नः ब्रह्मा म्लानमुखतां प्राप्तवान् । तावता मत्स्यावतारी विष्णुः तत्र प्रत्यक्षीभूय वेदान् तस्मै समर्पितवान् ।

ब्रह्मा विष्णोः मत्स्यावतारम् आतृप्ति दृष्टवान् । सः करौ योजयित्वा स्तुतिम् आरब्धवान् - ''हे नारायण ! यः भवतः मत्स्यावतारस्य स्मरणं करोति सः विपदः मुक्तः भविष्यति । प्रलयकाले यथा उपस्थिताः विपदः दूरं गताः तथैव भविष्यति तस्यापि जीवने । तस्य अज्ञानान्धकारः अपगतः भविष्यति'' इति ।

मत्स्यावतारस्य उद्देशः सफलः जातः आसीत् । अतः विष्णुः अन्तर्धानं प्राप्य स्वनिवासं वैकुण्ठं प्रति गतवान् ।

ब्रह्मा वेदान् प्राप्य सृष्टिकार्यस्य पुनरारम्भं कृतवान् । सत्यव्रतश्राद्धदेवः वैवस्वतनाम्ना मनुः जातः ।

सप्तर्षयः आकाशे स्वस्थाने तिष्ठन्तः सप्तर्षिमण्डलरूपेण प्रकाशमानाः जाताः । ते ध्रुवनक्षत्रं परितः भ्रमणम् आरब्धवन्तः'' इति सूतमहर्षिः कथां समापितवान् ।



तदा मुनयः उक्तवन्तः - ''सूतमहर्षिवर्य ! वयं ध्रुवस्य कथां श्रोतुम् इच्छामः'' इति ।

तदा सूतमहर्षिः पुनः कथनम् आरब्ध-वान् - ''एतस्मिन् प्रपञ्चे अत्युच्चे स्थले अस्ति ध्रुवमण्डलम् । विश्वस्वरूपस्य विष्णोः शीर्षस्थानं तत् ।

एतादृशम् उन्नतं स्थानं प्राप्तवान् ध्रुवः उत्तानपादनामकस्य राज्ञः पुत्रः । ध्रुवस्य माता सुनीतिः । सा उत्तानपादस्य ज्येष्ठा पत्नी । सुरुचिः तस्य कनिष्ठा पत्नी । सुरुच्यां राज्ञः अधिकप्रीतिः आसीत् ।

कदाचित् राजा सुरुच्याः पुत्रम् उत्तमम् अङ्के उपवेश्य लालयन् आसीत् । तदवसरे ध्रुवः तत्र आगतः । पितुः अङ्के उपवेष्टव्यम् इति तस्यापि मनसि इच्छा उत्पन्ना । सः आशापूर्णया दृष्ट्या पितुः मुखम् अपश्यत् । तावता सुरुचिः तत्र आगता । सुरुचेः असन्तोषात् भीतः राजा ध्रुवं दृष्ट्वा अपि अपश्यन् इव उपविष्टवान् । ध्रुवः चिन्तित-वान् आसीत् यत् मम पिता उत्तमम् इव माम् अपि स्वस्य अङ्के उपवेशयति इति । किन्तु तथा तु न जातम् । अतः ध्रुवस्य नेत्राभ्याम् अश्रूणि निर्गतानि । कपोले अश्रुबिन्दवः मौक्तिकानि इव स्थितानि ।

ध्रुवस्य दशां दृष्ट्वा सुरुचिः सशब्दं हसन्ती - ''अये ! दौर्भाग्ययुक्त बालक ! भवता आजीवनं तपस्या कृता चेदपि मम पुत्रेण यथा पितुः अङ्के उपविष्टं तथा उपवेशनस्य भाग्यं न प्राप्यते । यदि भवान् मम औरसः पुत्रः अभविष्यत् तर्हि तत् सौभाग्यं प्राप्तम् अभविष्यत् । भवान् सर्वदा नारायणस्य ध्यानं कुर्वन् भवति खलु ? तपस्यया सन्तोष्य तम् एव पृच्छतु यत् एतादृशं सौभाग्यं किं भवता दातुं शक्येत इति'' इति उपहास-पूर्वकम् उक्तवती ।

बालकस्य ध्रुवस्य मनः मुकुलितं जातम् । तदीयं दुःखम् उद्गतम् । तस्मिन् क्रोधः अपि उत्पन्नः । सुरुचेः हननं करणीयम् इति तस्य मनसि काचित् इच्छा सकृत् उत्पन्ना । अनन्तरक्षणे तस्य मनसि भावना उत्पन्ना - 'एषा मम उपदेशिका अस्ति । नारायणे विश्वासं करोतु, तपस्यां करोतु इति एषा माम् उपदिशन्ती अस्ति । एतादृशम् उपदेशम् अप्राप्तवान् उत्तमः एव दौर्भाग्यवान् अस्ति । मम पिता उत्तानपादः अन्धकाररूपे जाले निमग्नः हरिणः इव भाति' इति ।

यथा उपदेशं प्राप्य शिष्यः गुरुं प्रणमति तथा ध्रुवः सुरुचिं नमस्कृत्य ततः निर्गत-

वान् । तस्य एतं व्यवहारं दृष्ट्वा आश्चर्यचकिता सुरुचिः अचिन्तयत् – "उत्तमः बालकः एषः मम उपहासं प्राप्यापि मां प्रणम्य गतवान् । अथवा प्रणामात् ऋते किम् अन्यत् कुर्यात् एषः ? मम पुरतः मुखम् उद्घाटयितुम् एतस्य सामर्थ्यं वा कुत्र ? एतस्य मातुः अपि तादृशं सामर्थं नास्ति" इति ।

अश्रूणि स्रावयन्तं प्रत्यागतं ध्रुवं दृष्ट्वा दासीनां मुखाच्च प्रवृत्तं सर्वं श्रुत्वा स्वयम् अश्रूणि स्रावयन्ती सुनीतिः उक्तवती – "वत्स ! त्वया उच्यमानं सत्यम् एव । दासी इव जीवनं यापयन्त्याः मम गर्भतः किमर्थं वा उत्पन्नं भवता ? भवतः विमात्रा कथितं युक्तम् एव । नारायणात् ऋते अन्यः कोऽपि नास्ति भवतः सहायः" इति ।

मातुः वचनस्य श्रवणात् ध्रुवेन मनश्शान्तिः प्राप्ता । सः मातरम् अवदत् – "अम्ब ! अहं तपस्यां कर्तुं गच्छन् अस्मि । कृपया माम् आशिषा अनुगृह्णातु" इति ।

"किम् उक्तं भवता ? किं भवता तपस्या क्रियते ? तर्हि नारायणं प्रार्थयतु यत् अग्रिमं जन्म सुरुच्याः उदरे एव भवतु इति" इति अवदत् सुनीतिः ।

"अम्ब ! एतादृशानि वचनानि मा वदतु भवती । अहं भवत्याः पुत्रः अस्मि । कदापि आत्मनि हीनभावः न भवेत् । आत्मनि हीनभावः आत्महत्यासमानः । ध्रुवस्य माता महाभाग्यशालिनी इत्येतत् निरूपयितुम् इच्छामि अहम् । दिशाहीनानां दिशादर्शकः अहं यथा स्यां तथा वरं प्राप्स्यामि नारायणस्य प्रसादात्" इति उक्त्वा ध्रुवः तस्मिन् एव समये गृहात् निर्गतः ।



मध्येमार्गं नारदमुनिः तेन मिलितः । नारदः तम् अवदत् - ''हे ध्रुवकुमार ! भवान् क्रीडार्थं कुत्रापि गच्छन् अस्ति इव भाति'' इति ।

''श्रीमन् ! अहं तपस्यार्थम् अरण्यं गच्छन् अस्मि'' इति अवदत् ध्रुवः ।

''एवम् ! तपस्यानामिका अपि कापि क्रीडा किम् अस्ति ?'' इति पृष्टवान् नारदः ।

''न क्रीडार्थं गच्छामि । तपः कर्तुम् एव अरण्यं गच्छन् अस्मि'' इति ध्रुवः स्पष्टैः शब्दैः उक्तवान् ।

''अल्पस्य विषयस्य निमित्तं तपस्यार्थं गमनं किं शोभते ? आगच्छतु मया सह । भवतः पिता स्वस्य अङ्के भवन्तं किमर्थं न उपवेशयति इति अहं पश्यामि'' इति अवदत् नारदः ।

''श्रीमन् ! अहं कस्यापि दयां न इच्छामि । सर्वश्रेष्ठस्य नारायणस्य अनुग्रहः एव इष्यते मया । तं प्राप्तुम् एव अहम् अरण्यं गच्छन् अस्मि'' इति अवदत् ध्रुवः ।

''तपस्याचरणं न लीलाविषयः । अरण्ये व्याघ्रसिंहादयः क्रूरजन्तवः वसन्ति । आतपः वृष्टिः शैत्यादयः च सम्मुखीकरणीयाः भवन्ति । मम वचनम् अङ्गीकृत्य गृहं गच्छतु'' इति अवदत् नारदः ।

''मुनिवर ! अहं क्षत्रियः अस्मि । अपमानसहनपुरस्सरं जीवनम् अहं नेच्छामि । किं भवान् मां भीरुतारूपम् औषधं पाययितुम् इच्छति ?'' इति अपृच्छत् ध्रुवः ।

''वत्स ! ध्रुव ! भवतः दृढनिश्चयस्य परीक्षार्थम् एव अहम् एतानि वचनानि उक्तवान् । पूर्वं कदाचित् अहम् अपि अनाथः सन् अपमानम् अत्याचारं च अनुभूतवान् आसम् । ततः मया तपस्यया प्रगतिः साधिता । भवान् मधुवनं गत्वा 'ओं नमो नारायणाय' इति मन्त्रं जपन् तपस्यां करोतु । सफलतां प्राप्नोतु । मम आशीर्वादः भवन्तं रक्षिष्यति'' इति अवदत् नारदः ।

सूतमुनेः मुखात् एतानि वचनानि श्रुत्वा मुनयः अवदन् - ''मुनीन्द्र ! नारदेन कीदृशः अपमानः अत्याचारः च सम्मुखीकृतः ? नारदस्य वृत्तान्तं श्रोतुं कुतूहलिनः स्मः वयम् । कृपया तं श्रावयतु'' इति ।





# रक्तसम्बन्धः

बलरामः बलियानामकस्य ग्रामस्य निवासी । तारुण्ये स्थितस्य तस्य कोऽपि बन्धुः न आसीत् । आदिनं श्रमेण कार्यं कुर्वन् उदरं पूरयति स्म सः । रात्रौ सः सुखेन निद्रायां लीनः भवति स्म ।

कदाचित् रात्रौ सः कस्यचित् गृहस्य पुरतः शयितवान् आसीत् । निद्रा इतोऽपि तस्य समीपं न आगता आसीत् । तस्मिन् समये काचित् युवतिः तत्र आगत्य अन्यस्मिन् मञ्चे उपविष्टा । ततः सा स्वस्य स्यूतात् खाद्यवस्तूनि निष्कास्य खादने मग्ना ।

एतत् दृष्ट्वा बलरामः भीतः । सः तां पिशाचीं भावितवान् । भीत्या सः नेत्रे दृढतया पिहितवान् । अल्पे एव काले आत्मनि धैर्यं प्रपूर्य नेत्रे उद्घाट्य सः तां पृष्टवान् - ''भवती का ?'' इति ।

सा तरुणी आश्र्यर्यचकिता सती मन्दम् उक्तवती - ''अहं मनोहरस्य पुत्री'' इति ।

''एतस्मिन् मध्यरात्रे किमर्थम् अत्र आगतं भवत्या ?'' इति बलरामः ताम् आश्चर्येण पृष्टवान् ।

तरुणी सङ्कोचम् अनुभवन्ती उक्तवती - ''भवान् एतद्ग्रामीणः उत न इति अहं न जानामि । मम मातुः मरणानन्तरं मम पिता अन्यां परिणीतवान् । मम विमाता दुष्टा । 'पाकं सम्यक् न करोति' इति सर्वदा मां निन्दति सा । गृहे सर्वं कार्यं मम एव । अद्य मम पिता विमात्रा सह कार्यवशात् ग्रामान्तरं गतः । कदा तयोः प्रत्यागमनम् इति न जानामि । अतः गृहात् आनीतं खाद्यम् अत्र खादन्ती अस्मि'' इति ।

एतत् श्रुत्वा बलरामः हसन् उक्तवान् - ''भवत्याः विमाता श्वः प्रातः ज्ञास्यति यत् गृहे स्थितं मोदकं भवत्या एव खादितम् इति । तदा सा पुनः भवतीं निश्चयेन तर्जयिष्यति'' इति ।

''तत्सर्वम् अनन्तरकालीना वार्ता । इदानीं मोदकखादने विघ्नं मा करोतु भवान्'' इति



निर्विकारतया उक्तवती सा युवतिः ।

''पश्यतु । भवत्याः पिता मनोहरः मम दूरबन्धुः एव । मम मातापित्रोः मरणकाले दशवर्षीयः आसम् अहम् । तदा भवती षड्वर्षीया । अहं भवत्याः गृहे एव उषितवान् । भवत्याः पिता एव मां पालितवान्। भवत्या विमाता मयि चौर्यारोपं कृतवती द्वित्रवारम् । तदा भवत्याः पिता मां सम्यक् ताडितवान् । तेन मया तस्मात् गृहात् बहिः आगतम् । तदारभ्य अहं परिश्रमं कुर्वन् मम उदरम् अहमेव पूरयन् अस्मि । यत्र स्थलं लभ्यते तत्र शयनं करोमि । इदानीं मया स्मृतं भवत्याः नाम । भवती सुनीता ननु ?'' इति बलरामः तां तरुणीम् उक्तवान् ।

सा 'आम्' इति उक्त्वा तमेव क्षणं यावत् दृष्ट्वा ततः निर्गता ।

सुनीतायाः गमनानन्तरं बलरामः चिन्तामग्नः । तस्य मनोभित्तिकायां पुरा घटिताः सर्वाः घटनाः एकैकशः आगताः । 'मातापितरौ बाल्ये एतां सुनीतामेव मम पत्नी इति वदन्तौ आस्ताम् । एतत् श्रुत्वा सुनीतायाः माता हसति स्म..' इत्यादिकं स्मृतं तेन ।

'परन्तु इदानीम् आगता विमाता तत्सर्वमपि अन्यथा कृतवती । तया दीयमानं कष्टं सुनीता न सहते । गृहस्य सम्पूर्णं कार्यं सुनीतायाः एव । तथापि तया भोजनम् अपि सम्यक् न लभ्यते एव' इत्येवं चिन्तयन् बलरामः निर्णीतवान् - 'मनोहरं दृष्ट्वा सुनीतां परिणेष्यामि इति वदिष्यामि । भवतः गृहस्य क्षेत्रस्य सर्वस्य दायित्वम् अहमेव स्वीकरिष्यामि इत्यपि तं वदिष्यामि । वार्धके तस्य सहायकः अपि भविष्यामि' इति ।

एवं निश्चित्य सः प्रातः एव मनोहरं द्रष्टुं गतः । गृहस्य पुरतः स्थिते मञ्चे मनोहरः उपविष्टवान् आसीत् । तस्य पत्नी सुजाता अपि ततः अनतिदूरे द्वारसमीपे उपविश्य शाककर्तनं करोति स्म ।

बलरामं दृष्टवतः मनोहरस्य मुखं प्रसन्नम् अभवत् । किन्तु अनन्तरक्षणे एव कठिनस्वरेण सः बलरामम् उक्तवान् - ''मम गृहं किमर्थम् आगतः भवान् ? यदि मत्तः किमपि कार्यं स्यात् तर्हि गृहात् अन्यत्र कुत्रापि प्रष्टुं शक्यम् आसीत् ननु ?'' इति ।

तदा बलरामः निःसङ्कोचम् उक्तवान् - ''भवता ज्ञातमेव यत् मम कोऽपि बन्धुः नास्ति इति । भवतः अपि सुनीता एकमात्रपुत्री । बाल्ये यथा वार्तालापः जातः तथैव सुनीतया

सह मम विवाहं कारयतु । अहं भवतः क्षेत्रादिकं, गृहस्य समग्रं दायित्वं च वोढुं सिद्धः अस्मि । भवतोः अपि अहं सुखजीवनं कल्पयिष्यामि'' इति ।

अनेन वचनेन मनोहरः आश्चर्यचकितः अभवत् । सः कोपेन बलरामं पश्यन् उक्तवान् - ''पश्यतु बलराम ! एतत् सर्वं बहुपूर्वं प्रवृत्तम् । भवतः मातापित्रोः मरणानन्तरम् अहं स्वगृहे एव भवन्तं पालितवान् । किन्तु मम पत्न्याः दृष्ट्या भवान् कश्चन चोरः । तस्याः अनुमतिं विना अहं किमपि कर्तुं न शक्नोमि'' इति ।

अनयोः वार्तालापं सर्वम् अन्तः स्थित्वा एव सुजाता श्रुतवती । सा आगच्छन्तं कोपं सोढुं न शक्ता ।



बहिः आगत्य सा कोपेन उच्चस्वरेण - ''भोः, बालक ! भवान् अस्मान् मा वञ्चयतु । सुनीतायाः विवाहः कदा करणीयः केन सह करणीयः इत्यादिकं सर्वं तस्याः मातापितरौ आवां जानीवः । पुनः कदाचिदपि विवाहप्रस्तावं कर्तुम् आगतं चेत् भवतः हस्तपादौ भग्नौ भवेताम् । इदानीं भवान् निर्गच्छतु इतः'' इति वदन्ती स्वयं आवेशं निग्रहीतुम् अशक्नुवती कम्पमाना भूमौ पतिता एव ।

मनोहरस्य विमातुः च आक्रोशनं श्रुत्वा वस्त्रक्षालनकार्ये मग्ना सुनीता धावन्ती आगता । तत्रत्यां परिस्थितिं दृष्ट्वा सा किंकर्तव्यतामूढा अभवत् । बलरामः झटिति ग्रामवैद्यम् आनेतुं धावितवान् ।

बलरामः वैद्यं भद्राचार्यम् आनीतवान् । वैद्यः महता प्रयासेन औषधोपचारं कृतवान् । तदा सुजाता सचेतनतां प्राप्तवती । ततः वैद्यः ताम् उक्तवान् - ''आर्ये ! पूर्वमेव मया उक्तम् आसीत् यत् भवती रक्तचापपीडिता अस्ति इति । भवती लघुनि अपि विषये विना कारणम् उद्वेगं प्राप्नोति । भवती यदि जीवितुम् इच्छति तर्हि मासत्रयं विश्रान्तिं स्वीकरोतु । अपि च प्रातः सायं च सर्पगन्धालतायाः कोमलपत्राणां रसस्य पानं करोतु । सर्पगन्धालताः अस्माकं ग्रामस्य पश्चिमायां दिशि स्थिते राणापर्वते बहुधा प्राप्यन्ते । प्रतिदिनं ताः लताः अवचित्य ताभ्यः रसं निष्कास्य पातव्यम् । एतत् कर्तुं व्यवस्थां करोतु । आरोग्यविषये जागरूकता भवतु'' इति ।

एवम् उक्त्वा वैद्यः गतः । वैद्येन उक्तं सर्वं श्रुत्वा सुजाता दैन्येन सुनीताम् उक्तवती -

''सुनीते ! अहम् इदानीं यद् वदामि तत् वेदान्तवाक्यमिति वा संन्यासिनः वाक्यमिति वा मा चिन्तयतु । मनुष्यः यावत् स्वस्थः भवति तावत् सः अन्यस्य साहाय्यं न अपेक्षते । मया भवती प्रीत्या पालनीया आसीत् । किन्तु तथा न कृतं मया । विमात्रा इव व्यवहृतं मया । तस्य पापकार्यस्य फलं मया इदानीम् अनुभूयमानम् अस्ति । एतादृश्यां परिस्थितौ मां सेवताम् इति वक्तुमपि अहं न अर्हा । मम पापफलं मया एव अनुभोक्तव्यं किल ?'' इति ।

तस्याः वचनेन सुनीतायाः मनः द्रवीभूतम् । सा सुजाताम् उक्तवती – ''अम्ब ! भवती मां निन्दितवती, ताडितवती च । तादृशे अवसरे अहम् अपि कुपिता अभवम् । किन्तु अहं भवतीं सर्वदा माता इत्येव भावितवती । भवत्याः कापि चिन्ता मास्तु । अहं भवत्याः सेवां तथा करिष्यामि, यथा भवती पुनः पूर्ववत् स्वस्था भवेत्'' इति ।

मनोहरः प्रवृत्तं सर्वं मूकः इव पश्यन् आसीत् । तदा बलरामः अपि सान्त्वनवचनानि वदन् – ''मातः, चिन्तां मा करोतु । प्रतिदिनं प्रातः अहं सर्पगन्धालताः आनीय दास्यामि । भवत्या करणीयम् एकम् एव । मया यदा आगम्यते तदा भवत्या कदाचिदपि उद्विग्नया न भवितव्यम्, तावदेव'' इति अवदत् ।

सुजाता एतत् श्रुत्वा किमपि वक्तुकामा आसीत् । तावता मनोहरः पुनः उक्तवान् – ''आत्मीयानां प्रीतिः आपत्काले एव प्रकटिता भवति । रक्तसम्बन्धः नाम एषः एव । अहं बलरामस्य दूरबन्धुः । अत एव सः भवतीम् अपि बन्धुं भावयन् सर्पगन्धालतानाम् आनयनकार्यम् अङ्गीकृतवान् । ज्ञातं ननु'' इति ।

सुजाता किमपि वक्तुं न शक्ता । सा कम्पमानेन हस्तेन अश्रूणि मार्जयन्ती मौनेन उपविष्टवती ।

ततः केषुचित् एव दिनेषु सुनीतायाः बलरामस्य च सेवया सुजाता पुनः स्वास्थ्यं प्राप्तवती ।

ततः षण्मासाभ्यन्तरे सुजाता सुनीता-बलरामयोः विवाहं कारितवती । पत्युः सूचनानुसारं बलरामं स्वगृहमेव आनायितवती सा ।





# शृगालस्य बुद्धिमत्ता

कस्मिंश्चित् अरण्ये कश्चन शृगालः केनचित् वृकेण मिलितः । तयोः वार्तालापः आरब्धः । तदवसरे वृकः शृगालम् अपृच्छत् – ''भवता कियत् अधीतम् ?'' इति ।

''किम् अध्ययनचर्चया ? मया तु किमपि न अधीतम् एव'' इति अवदत् शृगालः ।

''अहं तु अधिकसुशिक्षितः अस्मि । अतः इतः परं भवता 'आर्य !' इति सदा अहं सम्बोधनीयः'' इति गर्वेण अवदत् वृकः ।

तस्मिन् एव समये कश्चन व्याघ्रः गर्जन् गुल्मानां मध्यतः बहिः आगतवान् ।

तदा शृगालः विनयेन वृकम् अपृच्छत् – ''आर्य ! इदानीं किं करणीयम् अस्माभिः ?'' इति ।

व्याघ्रस्य दर्शनात् वृकः नितरां भीतः आसीत् । सः शृगालं प्रतिवचनं किमपि न अवदत् ।

व्याघ्रः तयोः ग्रहणाय उद्युक्तः जातः । सः पुच्छं चालयन् दर्पेण अवदत् – ''किं भवन्तौ इतः पलायनं चिन्तयतः ? सर्वथा असाध्यं तत्'' इति ।

तदा शृगालः अवदत् – ''श्रीमन् ! आवां भवतः दर्शनाय एव प्रस्थितौ आस्व । तावता सौभाग्यवशात् भवतः दर्शनभाग्यम् अप्रयत्नेन अत्र प्राप्तम् । आवयोः काचित् जटिला समस्या उपस्थिता अस्ति । भवान् तु सुशिक्षितः, प्राज्ञः, अपारज्ञानवान् च । आवयोः समस्याम् ऋते भवतः, अन्यः कोऽपि परिहर्तुं न अर्हति । अतः अस्मत्समस्यापरिहाररूपः अनुग्रहः कृपया करणीयः भवता'' इति ।

शृगालस्य प्रशंसया व्याघ्रः सन्तुष्टः जातः । सः पृष्ठभागीयपादाभ्याम् उपविशन् अवदत् – ''वदतु, भवतोः सा जटिला समस्या का ?'' इति ।



शृगालः शिरः नमयन् विनयेन अवदत् – ''श्रीमन् ! पार्श्वस्थे अरण्ये सञ्चरन् अहं महता श्रमेण उभौ शशौ गृहीतवान्, आत्मना सह आनीतवान् च । मध्येमार्गं मिलितः एषः वृकः वदति यत् अहं सुशिक्षितः अस्मि, अतः एकः शशः मह्यं दातव्यः इति । तस्य एतत् कथनं मह्यं न अरोचत । तस्मै शशम् अर्पयितुं सिद्धः नास्मि अहम्'' इति ।

शृगालस्य वचनं श्रुत्वा व्याघ्रः वृकं नखशिखान्तं दृष्ट्वा अवदत् – ''भवता कियत् शिक्षणं प्राप्तम् इति आदौ वदतु'' इति ।

भीतिकारणतः वृकः किमपि न अवदत् । तस्य शरीरं नितरां कम्पते स्म । तदा शृगालः एव पुनः अवदत् – ''श्रीमन् ! भवतः मुखे यावन्तः दन्ताः सन्ति तावत्यः विद्याः अधीताः इति वक्तुम् इच्छति सः'' इति ।

''एवम् ! एवं तर्हि मया एव अधिकं शिक्षणं प्राप्तम्'' इति वदन् व्याघ्रः मुखं व्यादाय स्वस्य दंष्ट्रे दर्शितवान् । ते दृष्ट्वा वृकः कम्पमानः सन् मूर्च्छां गतः इव ।

एतत् दृष्ट्वा आश्चर्यं प्रकटयन् व्याघ्रः अपृच्छत् – ''किमेतत् ?'' इति ।

''श्रीमन् ! अत्र आश्चर्यस्य विषयः कः अस्ति ? शिक्षणविषये भवतः श्रेष्ठतां दृष्ट्वा सः भवतः दंष्ट्रे नमस्कृतवान् अस्ति । भवता अप्रत्यक्षतया आवयोः समस्यायाः परिहारः उक्तः इव । भवान् कृपया मम गृहम् आगत्य

तौ उभौ अपि शशौ स्वीकरोतु'' इति महता विनयेन अवदत् शृगालः ।

एतस्मात् व्याघ्रः नितरां सन्तुष्टः । सः अचिन्तयत् - 'आदौ शशौ खादिष्यामि । अनन्तरम् एतौ मारयित्वा खादिष्यामि' इति ।

''भवतु, गच्छाम तावत् भवतः गृहम् । मार्गं दर्शयतु तावत्'' इति उक्त्वा व्याघ्रः गमनाय सन्नद्धः जातः ।

शृगालः व्याघ्रं पर्वतमूलस्थस्य सुरङ्गस्य समीपं नीत्वा अवदत् - ''श्रीमन् ! आवाम् अत्रैव तिष्ठाव । एषः सुरङ्गस्य अन्तः गत्वा तौ शशौ आनयतु नाम'' इति ।

व्याघ्रः एतत् अङ्गीकृतवान् । सुरङ्गस्य मुखं विशालं न आसीत् । ततः कष्टेन वृकः सुरङ्गं प्राविशत् शृगालस्य सङ्केतस्य अनुगुणम् ।

कश्चन कालः अतीतः । वृकः सुरङ्गतः बहिः न आगतः ।

तदा शृगालः अवदत् - ''श्रीमन् ! यदि भवतः अनुज्ञा स्यात् तर्हि अहं सुरङ्गं प्रविश्य पश्येयं यत् सुरङ्गस्य अन्तः वृकः किं कुर्वन् अस्ति इति'' इति ।

''भवतु । भवान् अन्तः गत्वा परिशीलयतु । उभौ अपि शशौ स्वीकृत्य आगच्छताम्'' इति आदिशत् व्याघ्रः ।

शृगालः सुरङ्गस्य अन्तः अगच्छत् । दीर्घः कालः अतीतः । तथापि शृगालः वृकः वा सुरङ्गतः बहिः न आगच्छत् । कुपितः व्याघ्रः स्वयं तं सुरङ्गं प्रवेष्टुम् ऐच्छत् । किन्तु सुरङ्गस्य मुखं विशालं न आसीत् । अतः सः अन्तः गन्तुं न अशक्नोत् ।

'वराकौ एतौ' इति स्वगतं वदन् वृकशृगालौ निन्दन् ततः निर्गतवान् व्याघ्रः ।

किञ्चित्कालानन्तरं व्याघ्रस्य निर्गमनं दृढीकृत्य वृकशृगालौ सुरङ्गात् बहिः आगतौ । तदा वृकः शृगालं प्रशंसन् अवदत् - ''भवतः अध्ययनं मम अध्ययनात् न्यूनं स्यान्नाम । तथापि भवतः बुद्धिमत्ता तु अपूर्वा । स्वस्य चातुर्येण भवान् व्याघ्रम् अपि पराजितवान्'' इति ।

शृगालः उपहासमिश्रितेन स्वरेण अवदत् - ''आर्य ! सर्वं भवतः कृपया सम्पन्नम्'' इति ।





# धनिकनिर्धनयोः अर्थः

कस्मिंश्चित् ग्रामे धनगुप्तः नाम कश्चन वणिक् निवसति स्म । सः प्रभूतां सम्पत्तिं सम्पादितवान् आसीत् । वार्धक्ये पक्षवातेन पीडितः सः पश्चात्तापपूर्वकम् अचिन्तयत् – 'मया आजीवनं धनस्य सम्पादनार्थम् एव प्रयासाः कृताः । परोपकारार्थं मया किमपि न कृतम्' इति ।

अतः सः पुत्रं श्रीगुप्तं स्वसमीपम् आहूय अवदत् – ''वत्स ! जीवने जनोपकारकम् एकम् अपि कार्यं मया न कृतम् । कस्यचिदपि दरिद्रस्य, असहायस्य वा साहाय्यं वापि न कृतम् । भवता अपि एवं न करणीयम् । जीवनार्थं यावत् आवश्यकं तावत् धनं पृथक्कृत्य रक्षित्वा अवशिष्टेन धनेन धर्मशालां निर्मातु'' इति । ततः अल्पे एव काले सः प्राणैः वियुक्तः जातः ।

पितुः अन्त्यसंस्कारं यथाविधि कृतवान् श्रीगुप्तः वाणिज्ये निमग्नः जातः । तस्मिन् वर्षे निरीक्षातः अपि अधिकः लाभः प्राप्तः तेन । तदा तेन पितुः वचनं स्मृतम् ।

सः अचिन्तयत् – 'एतस्मिन् वर्षे लाभः प्राप्तः । अग्रिमे वर्षे हानिः अपि सम्भवेत् कदाचित् । अतः अग्रिमे वर्षे अपि यदि लाभः प्राप्स्यते तर्हि धर्मशालानिर्माणं कारयिष्यामि । इदानीम् एव तदर्थं व्ययः हानये भवेत् कदाचित्' इति ।

अनन्तरवर्षे अपि तेन द्विगुणितः लाभः प्राप्तः । तथापि तेन तृप्तिः न प्राप्ता । सः धर्मशालानिर्माणविचारम् अग्रे सारितवान् ।

कदाचित् रात्रौ दीर्घकालपर्यन्तं श्रीगुप्तः आयव्ययादिकं लिखन् आसीत् । तत्समये कश्चित् शरीरे महतीं पीडाम् अनुभवन् वेदनामिश्रितं ध्वनिम् उत्पादयन् तस्य गृहस्य पुरतः उपविष्टवान् । श्रीगुप्तः वातायनात् दृष्टिं प्रसारितवान् । कश्चन अन्धः भिक्षुकः वेदनाम् अनुभवन् तस्य गृहस्य पुरतः उपविश्य स्वस्य भिक्षापात्रं हस्तेन स्पृष्ट्वा परिशीलयन् आसीत् ।

अत्रान्तरे अपरः कश्चन भिक्षुकः खञ्जन् तत्र आगत्य अन्धस्य भिक्षुकस्य पार्श्वे उपविशन् अपृच्छत् - "जीवन ! किमर्थं वेदनामिश्रितः ध्वनिः उत्पाद्यते ? किम् अभवत् भवतः ?" इति ।

तदा जीवनः पीडाम् अनुभवन् अवदत् - "अये नारायण ! अहं तु अन्धः खलु ? प्रातः भिक्षायाचनावसरे कुत्रापि पादस्खलनं प्राप्य अपतम् । तस्मात् भिक्षार्थम् अटितुं न शक्तं मया । अतः अद्य भिक्षा कापि मया न प्राप्ता । पादवेदना एकत्र । महती बुभुक्षा अपरत्र । अहो, दुःस्थितिः मम !" इति ।

नारायणः जीवनस्य पादं परीक्षितवान् । पादः स्फीततां गतः आसीत् । नारायणः स्वस्य स्यूततः भिक्षापात्रं निष्कासयन् - "अहं भवतः पादस्य वेदनां तु अपनेतुं न शक्नोमि । किन्तु भवतः बुभुक्षाम् अवश्यम् उपशमयितुं शक्नोमि" इति वदन् स्वस्य भिक्षापात्रं तस्य पुरतः स्थापितवान् ।

"भवता अपि किमपि खादितम्, उत सर्वं मह्यम् एव दीयमानम् अस्ति ?" इति पृष्टवान् जीवनः ।

"यावत् अस्ति तत् द्विधा विभज्य अर्धभागः भवते दत्तः अस्ति मया । सन्तोषेण खादतु भवान्" इति अवदत् नारायणः ।

वातायनस्य पार्श्वे स्थित्वा एतत्सर्वं पश्यन् आसीत् श्रीगुप्तः । तस्मिन् विवेकः उदितः । सः अचिन्तयत् - 'स्वस्य समीपे यावत् अस्ति तावत् विभज्य स्वीकुर्वन् एषः भिक्षुकः नारायणः एव धनिकः । कस्मैचिदपि किमपि दातुम् अशक्नुवन् जीवनः तु दरिद्रः । अहं धनवान् सन् अपि दरिद्रः इव जातः अस्मि' इति ।

एवं चिन्तितवान् श्रीगुप्तः द्वारम् उद्घाट्य तयोः भिक्षुकयोः कृते पूर्णोदरं भोजनं दत्त्वा शयनार्थं गृहस्य अन्तः व्यवस्थां कृतवान् । अनन्तरदिने जीवनस्य पादस्य चिकित्सां कारितवान् सः । धर्मशालानिर्माणकार्यस्य आरम्भः तस्मिन् एव दिने जातः ।

श्रीगुप्तः धनिकनिर्धनपदयोः अर्थं सम्यक् अवगतवान् आसीत् । अतः यथा धनं सम्पाद्यते स्म तथैव परोपकारार्थं तस्य विनियोगः अपि तेन कृतः ।



# आर्यः

6

## राजकुमारस्य अज्ञातं रहस्यम्

जयानन्दस्य शिष्यः एकं बालकं मूर्च्छां गतां महिलां च पश्यति । सचेतनतां गता महिला पुत्रं सकृत् दृष्ट्वा प्राणान् अत्यजत् । तस्याः आत्मा मुनेः पुरतः प्रकटितः भवति । सा आसीत् शान्तिपुरस्य राज्ञी । शिष्यः गोविन्दः निवेदयति यत् राज्ये विप्लवः उत्पन्नः अस्ति, राजा च न दृश्यते इति ।

चित्रम् - गान्धि-अय्यः

जयानन्दस्य निर्देशस्य अनुगुणं तदीयौ शिष्यौ शान्तकुमार्याः शरीरस्य निखननाय एकं गर्तं निर्मातः ।

एतम् इतोऽपि गभीरं करोतु राम !

गोविन्द ! शिलाखण्डैः एतस्य चतसृषु दिक्षु भित्तिं रचयतु ।

वत्स ! एतं श्वेतं पुष्पं मातुः शरीरस्य उपरि स्थापयतु, तस्याः चरणयोः स्पर्शं करोतु च ।

अन्यौ शिष्यौ साहाय्यं कर्तुम् आगच्छतः । तयोः साहाय्येन तौ शरीरं गर्ते स्थापयतः ।

काष्ठमयस्य आवरणस्य उपरि मृद्राशिं निर्मान्तु । शरीरं कथमपि हानिग्रस्तं न भवेत् ।


अयि व्याघ्री ! भवतोः अन्यतरेण तावत् एतस्य स्थलस्य रक्षणं करणीयं, यावत् अहं निषेधं न करोमि ।
आगच्छन्तु, आश्रमं गच्छाम । एतस्य बालस्य रक्षणं पोषणं च कथम् इति चिन्तयाम ।


राजधान्यां राजकुमारस्य जन्मदिनस्य आचरणम् आकस्मिकतया स्थगितम् इत्यतः जनेषु अशान्तिः उत्पन्ना दृश्यते ।
सर्वे सावधानं शृण्वन्तु । इदानीं राज्यम् अपायग्रस्तम् अस्ति । दुष्टशक्तयः कार्यप्रवृत्ताः दृश्यन्ते । राजा, राज्ञी, राजकुमारः च कुत्रापि न दृश्यन्ते ।
सेनापतिः वीरसिंहः इदानीं शासनभारं वक्ष्यति ।


राजा कुत्र ? एतत् ज्ञातुम् अस्ति अस्माकम् अधिकारः ।
एषः भवत्सम्बद्धः विषयः न । भवन्तः स्वगृहं प्रतिगच्छन्तु तावत् ।


आनन्दपूर्णायाः रात्रेः अनन्तरं दुःखदा वार्ता ।
किमपि चर्चनीयं नास्ति । मम आदेशः पाल्यताम् ।
किं भाविनि काले वयं शान्तिं सुरक्षां च प्राप्तुं शक्नुयाम ?
निर्वचनं स्थातव्यम् इति उक्तं खलु मया ?
रक्षक ! एषः नीयताम् अन्यत्र ।


भवता अहं किमर्थम् आहूतः ?
मम राज्याभिषेकस्य विषये चिन्तनीयम् अस्ति आचार्य !
एतदर्थम् उत्तमस्य मुहूर्तस्य निश्चयः भवतु ।
किन्तु राज्याभिषेकः तदा एव भवितुम् अर्हति...
... यदा च ज्ञायेत यत् राजा निश्चयेन न जीवति इति ।
रक्षक ! एतं कारागारे स्थापयतु ।


राजास्थाने सेनापतिः मन्त्रिणम् उद्दिश्य वदति ।
मानवेन्द्र ! अहं सदा स्थानापन्नराजत्वेन स्थातुं न अर्हामि । भवता मम पट्टाभिषेकस्य व्यवस्था अवश्यं करणीया ।


सेनापते ! अस्माभिः इतोऽपि कानिचन दिनानि किं प्रतीक्षा न करणीया ?
किं मां सेनापतित्वेन सम्बोधयति ? कियत् धैर्यं भवतः ? वास्तविकः राजा अहम् एव इति किं भवता न ज्ञायते ?


राजा सः एव भवति यश्च प्रजानां समृद्धिं चिन्तयति, राज्ये शान्तिं च स्थापयति । भवान् तादृशः स्याद्वा इत्यत्र सन्देहः मम ।
भवदधीनत्वेन अहं स्थातुं न इच्छामि ।
वरम् एव एतत् ! पीडा अपगता मम ।

यदि अन्यः कोऽपि तम् अनुसर्तुम् इच्छति तर्हि सः गन्तुम् अर्हति ।

आस्थानस्थाः बहवः ततः निर्गच्छन्ति । वीरसिंहः एकाकी अवशिष्टः ।

मानवेन्द्रः प्रतिदिनम् इव तस्मिन् अपि दिने पूजार्थं शिवमन्दिरं प्रति गच्छति ।

प्रत्यागमनसमये अपरिचिताः त्रयः जनाः तस्य प्रतीक्षां कुर्वन्तः आसन् ।

विद्युद्गत्या कश्चन खड्गः तेषां त्रयाणाम् अपि शिरसः छेदम् अकरोत् । त्रयः अपि मरणं प्राप्तवन्तः ।

भवान् ?

प्रतिवचनं मास्तु । त्वरया अमृतसरं गच्छतु ।

अनुवर्तते

# पृष्टोऽयं भवताम् पृष्टोऽयं भवताम्

## विज्ञानं भवतां कृते

### लवणात् तृषा कथम् ?

लवणयुक्तः पदार्थः सेव्यते चेत् झटिति तृषा जायते इत्यंशः भवद्भिः लक्षितः स्यादेव । लवणसेवनात् तृषा जायते इति सर्वे जानन्ति ।

लवणसेवनानन्तरं शरीरे या जलस्य आवश्यकता दृश्यते सा कथम् उत्पद्यते ? प्रवर्तते तु एवम् - यदा शरीरस्य अन्तः लणणांशः अधिकः भवति तदा तत्रत्यानि अङ्गानि तत् जलम् अधिकतया आकर्षन्ति यच्च जलं मूत्रकोषं प्रति गच्छति, यत्र च अनपेक्षितः जलांशः सङ्गृहीतः भवति । लवणांशस्य आधिक्ये सति नाडीषु स्थितस्य जलांशस्य आकर्षणम् अधिकं भवति, तदा तत्र जलाभावः सन्दृश्यते ।

नाडीषु जलांशस्य अभावः यदा भवति तदा ताः जिह्वाम् उदरं च प्रति एतम् अंशं सूचयन्ति । तस्मात् एव जलपानेच्छा उत्पद्यते ।




## भवतां परिसरः

### शाखाग्रे नीडः रक्षणाय



पक्षिणां नीडाः शाखायाः अग्रभागे एव भवन्ति इत्यंशः किं भवद्भिः लक्षितः ? एतस्य कारणं - अण्डानां शावकानां च रक्षणम् । स्वस्य अण्डानि शावकाः च शत्रूणाम् आहाराः न भवेयुः इति ते यत् इच्छन्ति तत् तु सहजम् एव ।

अण्डानि तु निर्जीवानि इव । शावकाः यद्यपि सजीवाः, तथापि न डयनसमर्थाः । अतः ते आत्मरक्षणं स्वयं कर्तुं न अर्हन्ति । मार्जारादयः तु वृक्षारोहणनिपुणाः । निश्शब्दं वृक्षम् आरुह्य नीडस्थान् असहायान् पक्षिशावकान् ते खादितुम् अर्हन्ति एव ।

यदि शाखा उन्नते स्थले भवति, यदि च आरोढुः भारं न सहते तर्हि मार्जारादयः तां शाखां न आरोहन्ति पतनभीत्या ।

अतः एव पक्षिणः नीडरचनाय उन्नतां कृशां दुर्बलां च शाखां चिन्वन्ति ।

शाखातः नीडः यथा न पतेत् तथा दृढतया रचयन्ति ते पक्षिणः ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

भवन्तः कदाचित् असमाप्तनिद्राः सन्तः प्रातः उत्थितवन्तः स्युः कस्यचित् घोरिकाशब्दात् पीडिताः सन्तः रात्रौ ।

घोरिका न उपहासस्य विषयः । ये तं शब्दं शृण्वन्ति अपरिहार्यतया ते महान्तं कष्टम् अनुभवन्ति इति तु सत्यम् ।

किमर्थं वा घोरिका उत्पद्यते ? कण्ठमार्गे नासिकायां वा यदा बाधा उत्पद्यते (पीनस-कारणतः अननुगुणताकारणतः वा) तदा




घोरिकायाः उत्पत्तिः भवति । यदा कश्चित् उत्तानशायी भवति तदा घोरिकायाः आरम्भः भवति । तदवसरे अधराहनुः उद्घाटितः भवति । यदा श्वासोच्छ्वासः भवति तदा अलिजिह्वायाः मृदु अग्रं कम्पते । (एषा अलिजिह्वा जिह्वामूले कण्ठस्य अन्तः तिष्ठति) तदा घोरिका-शब्दस्य उत्पत्तिः भवति ।

## ज्ञानशक्तिः वर्ध्यताम्

### पशुपक्षिप्रपञ्चः



१. कः जीवी तस्यां शय्यायां पुनः शयनं न करोति, यत्र पूर्वं शयनं कृतम् आसीत् ?



२. ग्रीक्सैनिकाः कश्चित् समुद्रपक्षिणं दृष्ट्वा तं स्त्रीजातीयं मत्वा 'मेर्मेड्' इति निर्दिष्टवन्तः । सः जीवी कः ?



३. मानवाः यान् वर्णान् द्रष्टुं न शक्नुवन्ति तान् किं कीटाः अभिज्ञातुम् अर्हन्ति ?



४. निसर्गे अतिक्रूरः लुण्ठनप्रवृत्तियुक्तः च जीवी कः ?



५. अण्टार्कटिकाप्रदेशे किं कीटाजातीयः कोऽपि भवति ?

*(उत्तराणि ६६ तमे पृष्ठे)*

# चित्रशीर्षिकास्पर्धा



**अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



MAHANTESH C. MORABAD



SOURAA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## पुरस्कृता शीर्षिका





गुहाजीवी नूतनपीठे
गुहाजीवी पुराणगेहे

## अभिनन्दनानि

**'डिसेम्बर्'मासस्य चित्रशीर्षिकाप्रेषिका -**

**के. जयलक्ष्मी श्रीवत्सन्**
*चेडिच्चेरी, पेरुवलथपराम्बा*
*कण्णूरु*, **केरलम् - ६७० ५१३**

## परिवर्ध्यतां ज्ञानम्

१. गोरिल्ला प्रतिदिनं नूतनां शय्यां सज्जीकरोति ।
२. डगाङ्ग् ।
३. आम् । मधुमक्षिकाः अतिनीललोहितं वर्णम् अभिज्ञातुं शक्नुवन्ति, न तु मानवाः ।
४. मानवः ।
५. आम् । तत्र ४० कीटजातीयाः परिदृष्टाः ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)



# AN IDEAL NEW YEAR GIFT

*to your near and dear abroad*

CHANDAMAMA

CHANDAMAMA **bilingual**

in Hindi-English, Telugu-English, Tamil-English
published for Indian families in
USA and Canada

**Different from
the Indian editions in size, layout
and design**

**Helps the reader
to keep in touch with
mother tongue.**

**Remit only Rs.1,500 for an
overseas GIFT subscription and save
more than Rs.600**

**Special offer closes
on February 29,2004**

*Remittances by D/D in favour of*

Chandamama India Ltd.
82, Defence Officers Colony, Ekkaduthangal, Chennai - 600 097
**Indicating the bilingual edition preferred and full name and
address of friend / relative living abroad.**

Send Rs.50 by M.O. for specimen copy

For residents in USA/Canada one-year subscription US $ 48.00.
Contact Nataka at rganesh@bellsouth.net

